| | | |
|---|---|---|
| Title | : | Sahitya Vedika ( साहित्य-वेदिका ) |
| Vol. : | : | 06, 07 |
| Year | : | 2022, 2023 |
| ISSN | : | 2582-2616 |
| Price | : | 350/- |





| | | |
|---|---|---|
| Copy | : | 100 |
| **Printed and Published by** | : | Prof. Madan Mohan Pathak<br>Central Sanskrit University, Vedavyas Campus,<br>Balahar, Himachal Pradesh-177108 |
| **Editor** | : | Dr. Shyam Babu |
| **Email** | | sahityavedikavvc@gmail.com |
| **Website** | | http://www.csu-balahar.edu.in |
| **Fax/Phone** | | 01970-245409, Mob. No. 9816400536 |
| **Printed at** | : | Sharma Trading Company<br>V.P.O. Pragpur Tehsil Dehra Distt. Kangra H.P.<br>8628833269 (M) |
| **Composed and Designed By** | : | Ajay Sharma for Sharma Trading Company |

## सम्पादकीयम्

सर्वविधकल्याणप्रदायिन्याः भगवत्याः श्री ज्वालादेव्याः पादपद्मे राराज्यते केन्द्रीयसंस्कृतविश्वविद्यालयस्य प्रसिद्धं वेदव्यासपरिसराख्यं विशिष्टं शिक्षाकेन्द्रम्। अस्य परिसरस्य संस्कृतसाहित्यविद्याशाखा भारतीयज्ञानपरम्पराभूयिष्ठा साहित्यवेदिका इति नाम्नी एका पत्रिका प्रतिवर्षं प्रकाश्यते। अस्मिन् वर्षेऽपि अस्याः पत्रिकायाः संयुक्ताङ्कः (2022, 2023, अङ्कं 06, 07) प्रकाश्यतेऽनेनविभागेन। अस्यां वार्षिकशोधपत्रिकायां वेदवेदाङ्गदर्शनाधुनिकविषयेन सम्बद्धाः ज्ञानविज्ञानवासिताः नैके शोधलेखाः संस्कृतहिन्दी-आङ्गलभाषाभिः उपनिबद्धाः सन्ति। सुचिन्तकै विलिखितेषु शोधलेखेषु जिज्ञासूनां कृते उत्तमा अध्ययनासामग्री वर्तते। चिन्तकैः विलिखिताः शोधलेखाः सर्वथा विद्वन्मण्डलेन संशोधिताः। पत्रिकैषा विद्वन्मण्डले सुप्रतिष्ठिता भवतु इति भगवतीं ज्वालादेवीं प्रार्थ्यन् समेभ्यो मंगलकामनापुरस्सरं विरमामि वाग्व्यापारात्। अस्मिन् कर्मणि संलग्नाः समेऽपि सम्पादकमण्डलसदस्याः सविशेषमभिनन्दनीयाः।।

**सम्पादकः**

# विषयसूची

ISSN 2582-2616

# मुद्राराक्षसनाटके अमात्यः

डॉ. जे. बलिचक्रवर्ती

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**
**करोति कीर्तिं प्रीतिं च साधुकाव्य निषेवणम्[1] ॥**

इति काव्यात् प्राप्यानि बहूनि प्रयोजनानि आलङ्कारिकैः निरूपितानि। धर्मार्थकाममोक्षाः पुरुषार्थाः तैरेव लोकव्यवहारः सर्वो भवति। मोक्षः न सर्वैः अपेक्षितः, एवं धर्मकामौ वयोऽवस्थापेक्षिणौ, किन्तु अर्थः बाल्यादारभ्य जीवितसमाप्तिपर्यन्तं सर्वदा अपेक्षितो भवति। जातकर्मणः आरभ्य अन्तिमसंस्कारपर्यन्तं सर्वस्मिन् कर्मणि अर्थापेक्षा भवति। न केवलमर्थव्यवहारः वैयक्तिकः किन्तु सामाजिकः राज्यनिर्वाहक विषयश्च भवति। राज्येन समाजस्य सुखस्थितिः, समाजेन व्यक्तेः सुखस्थितिः इति अर्थापेक्षा शृङ्खला रूपा। राज्ये अर्थव्यवहारनिर्वहणं कथं कार्यमिति निरूपकं शास्त्रम् अर्थशास्त्रम्। तदेव प्राचीनैः राजनीतिः इति व्यवहृता। द्रव्यसमुपार्जनं, राज्यरक्षणं, प्रजापालनं स्वपोषणम् इति सर्वम् अर्थशास्त्रविषयः। अद्यतनकाले आयव्ययनिर्वहणशास्त्रम् अर्थशास्त्रमुच्यते (Economics)। राज्यनिर्वहणार्थं सप्ताङ्गानि मुख्यतया अपेक्षितानि।

**'स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि सप्तप्रकृतयः'[2]।**

एताः सप्तप्रकृतयः एव अङ्गानि इति व्यवहृतानि। अद्यतनकाले प्रजातन्त्रपालनेऽपि एतान्येव सप्ताङ्गानि शासननिर्वहणे प्राणप्रदानि भवन्ति। तत्र स्वामी इति अङ्गमेव यद्यपि इदानीं परिवृत्तं तथापि राजकीयव्यवस्थायां यः कोऽपि मुख्यो भवत्येव। इदानीं प्रजातन्त्रव्य-वस्थायां राष्ट्रपतिः एव स्वामी, यस्यानुमत्या सर्वोऽपि राजकीयव्यवहारः प्रचलति। एवं सर्वेषु पालनाभेदेष्वपि मन्त्री अपरिहार्यः भवति। मन्त्रिणा दर्शितमार्गः शासकः प्रजारञ्जकः पालको भवति। एवम् अद्यतनकालेऽपि प्राचीनमर्थशास्त्रं महदुपकारकम्।

रामायणकालादारभ्य अद्यावधि राजकीयव्यवस्थायां मन्त्री राज्यभारनिर्वाहको भवति। तथाविधं मन्त्रिणः प्राधान्यं संस्कृतवाङ्मये मुद्राराक्षसनाटके बहुधा निरूपितम्। मुद्राराक्षसनाटके निरूपितानि मन्त्रिलक्षणानि अद्यापि आचरणीयानि वर्तन्ते।

**मन्त्रिभेदाः**-अर्थशास्त्रे बहुविधाः मन्त्रिणो वर्णिताः। मन्त्रिणि यानि लक्षणानि अपेक्षितानि तानि सर्वाणि राज्यभारनिर्वाहकेषु सर्वेष्वपि अधिकारिषु भाव्यानि। जानपदः अभिजातः, स्ववग्रहः, कृतशिल्पः, चक्षुष्मान् प्राज्ञः, धारयिष्णुः, दक्षः, वाग्मी, प्रगल्भः, प्रतिपत्तिमान्, उत्साहप्रभवयुक्तः, क्लेशसहः, शुचिः, मैत्रः, दृढभक्तिः, शीलबलारोग्यसहसंयुक्तः, स्तम्भचापल्यवर्जितः, संप्रियः, वैराणामकर्तेत्यमात्पसम्पत्। अतः पादार्थगुणहीनौ मध्यमावरौ[3]।

पूर्वोक्तेषु अर्थशास्त्रप्रतिपादितेषु मन्त्रिलक्षणेषु सर्वलक्षणसम्पन्नः मन्त्री भवति। मन्त्रि-गुप्तालोचने इति धातोः मन्त्रशब्दः निष्पन्नः। तदस्यास्तीति मन्त्री। गूढाः रहस्यविषयाश्च मन्त्रिणा सह आलोच्य करणीयाः। शासकस्य मनसि वर्तमानमालोचनम् ''इदमुत्तमम् अस्मिन् अयं दोषः'' इति यो विविच्य वक्तुं प्रभवति सः मन्त्री। तेनैव मतेः कर्म मात्यम् (आलोचनं) भवति। पूर्वोक्तगुणेषु कैश्चित् गुणैः हीनोऽपि यः समर्थो भवति सोऽपि चिन्तितस्य कर्मणः आचरणे दक्षो भवत्येव सः अमात्यः। न विद्यते मात्यं येन सः अमात्यः। राज्यव्यवहारनिर्वहणे दूतः, प्रणिधिः अपि मुख्यौ भवतः। मन्त्रिणः अमात्यादपि कश्चित् गुणैः हीनाः दूताः, प्रणिधयश्च भवन्ति। उद्धृतमन्त्रे दूतप्रणिधिः एवं मन्त्री, अमात्यः, सचिवः, दूतः इति सर्वे प्रायशो मन्त्रितुल्याः भवन्ति। सर्वाण्येतानि अद्यतनकालेऽपि अत्यन्तोपयोगीनि मन्त्रिलक्षणानि मुद्राराक्षसनाटके चाणक्यराक्षसादिपात्रेषु वर्णितानि।

**अद्यकालेऽपि उपयोगीनि मन्त्रिलक्षणानि-**

**1. देशभक्तिःप्रज्ञा, कार्यदक्षता -**

**अप्राज्ञेन च कातरेण च गुणः स्याद् भक्तियुक्तेन कः प्रज्ञातिक्रमशालिनोऽपि हि भवेत्किं भक्तिहीनात्फलम्।**
**प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये तेभृत्यानृपतेःकलत्रमितरेसंपत्सुचापत्सुच[4] ॥**

देशभक्तिसम्पन्नः मन्त्री प्रज्ञाहीनः चेत् न कार्यनिर्वहणसमर्थः भवति। विक्रमः कार्याचरणे दक्षता = सामर्थ्यम्। समर्थोऽपि प्रज्ञाहीनः कार्यं चिन्तयितुं न समर्थः। ''प्रज्ञा त्रैकालिकीमता'' अतीते काले किं शुभमशुभं वा अभूत् तं रक्षितुं निवर्तयितुं वा मम चिन्तितं किं प्रयोजकम् इति अतीतज्ञानी भवेत्। वर्तमानकाले करणीयं प्रयोजकं भवेत्। आगामिनिकाले अनर्थहारकं शुभप्रदं च भवेत् एवं विध कार्यनिर्णये समर्थः प्रज्ञावान्। एवं देशभक्तिः, प्रज्ञा, कार्यदक्षता इति त्रयोगुणाः यस्मिन् दृष्टाः स एव मन्त्री भवितुमर्हति इति चाणक्योक्तिः अद्यापि दृष्टकला एव।

सरदार वल्लभभायिपटेल् प्रज्ञावान् स्वातन्त्रयप्राप्तेः समनन्तरमेव षट्शतसंख्याकानि संस्थानानि एकीकृत्य सुसंहतं भारतं निर्मितवान्। तथा देशे तदानीं वर्तमानाः अन्तःकलहाः शान्ताः तदानीं सपदि शक्तिमत् भारतमद्यापि अखण्डं वर्तते। तादृशी प्रज्ञा सर्वेषु मन्त्रिषु सार्वकालिकी अपेक्षिता भवत्येव।

ISSN 2582-2616

**2. दुरूह्यमन्त्रशक्तिः**-अद्यतनकालेऽपि अमात्यः चाणक्यः इव परैः अज्ञेयं दुर्भेद्यं मन्त्रं रचयित्वैव देशक्षेमाय कल्पते। मन्त्रिणः आलोचनं शत्रुभिः ज्ञातमिव भाव्यम्। विचार्यमाणे अस्यार्थः किं ? फलं किं ? इति ज्ञातुमपि प्रतिपक्ष अशक्तो भवेदेव। कदाचित् शत्रुः प्रतिपक्षिणं क्षीणमिव दृष्ट्वा यथा प्रमत्तो भवति तथा आलोचनं विधेयम्। बलहीनः इति भ्रान्त्या यदा शत्रुः प्रचलति तदैव मन्त्रालोचनेन बलं दर्शयित्वा शत्रुः व्यापादनीया यथा-नियति शक्तिः अचिन्त्या भवति, तथैव मन्त्रिणः कार्यचिन्तनं कुर्युः इति भागुरायण कृता चाणक्यनीतिप्रशंसा अद्यापि सर्वैः मन्त्रिभिः आश्रयणीया।

**मुहुर्लक्ष्योद्भेदामुहुरधिगमाभावगहना मुहुः संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः।**
**मुहुर्नश्यद्बीजा मुहुरपि बहुप्रापितफले-**
**त्यहोचित्राकारा नियतिरिव नीतिर्नयविदः[5] ॥**

**3. भेदतन्त्रः**-

चाणक्यकृतो भेदतन्त्रः बहोः कालात्प्रागेव निश्चितफलः। ''राक्षसं मलयकेतो-भिन्ना चन्द्रगुप्ताधीनं करिष्यामि'' इति चाणक्यस्य प्रतिज्ञा देशक्षेमकरी आसीत्। संवत्सरानन्तरभाविनं कार्यं अद्यैव दृष्ट्वा तदानीं फलप्रदायकं तन्त्रं प्रथममेव चिन्तितवान्। शकटदासादयो भृत्याः प्रथमं राक्षसान्तिकं प्रेषिताः। भद्रभटादय अन्तःकलहव्याजेन निष्क्रम्य मलय-केतुसेनायां प्रविष्टाः। एवं भागुरायणादयः अपि समर्थाः मन्त्रिसदृशाः पुरुषाः शत्रुस्थानेषु उन्नतपदेषु यथा नियुक्ताः भवन्ति तथा कार्यं चिन्तितम्। एवं विधस्य दूरदर्शनः मन्त्रिणः अवसरः अद्यापि अभिलषितः एव। स्वयं महामन्त्री सर्वकार्यचतुरः मेधावी राक्षसोऽपि चाणक्यनीतिं ज्ञातुमशक्तः। षष्ठाङ्कान्ते राक्षसः अपि चाणक्यनीत्या दिङ्मूढः भूत्वा चाणक्यनीतिमेवं प्रशसंति।

राक्षसः (स्वगतम्) अहो दुर्बोधश्चाणक्यबटोर्नीतिमार्गः। कुतः।

**यदि च शकटो नीतः शत्रोर्मतेन ममान्तिकंकिमिति निहतस्तेन क्रोधाद्वधादिकृतो जनः।**
**अथ न कृतकं तादृक्कष्टं कथं विभावयेदिति मममतिस्तर्कारूढा न पश्यति निश्चयम्[5] ॥**

**4. प्रजाक्षेमतत्परोमन्त्री निरीहो भवेत्**-ईहा = अत्याशा अनुचिता वा आशा। अद्यतनकाले केचन मन्त्रिणः मार्गे गच्छन्तमपि शासकं सत्कार्यकारिणं स्तुवन्तः तात्कालिक प्रयोजनाभिलाषिणः पदवीस्थैर्याभिलाषिणश्च भवन्त्येवेति दृष्टचरो विषयः। तथाविधाः मन्त्रिणः कदापि प्रभोः हिताय देशक्षेमाय वा न भवन्ति। प्रत्युत 'दुर्मन्त्रात् नृपतिर्विनश्यति' इति हितोक्तेः लक्ष्भूताः प्रभोः नाशकाः एव भवन्ति। तथाविधाः मन्त्रिणः सर्वथा परित्याज्याः इति राजनीतिं बहोः कालात्प्रागेव विशाखदत्तः चाणक्यवर्णने कञ्चुकिनः वाक्येषु सूचितवान्। अपथे गच्छन्तं प्रभुमपि अद्यतनकाले प्रधानमन्त्री प्रभृति शासकमपि योग्ये वर्त्मनि स्थापयितुं समर्थः मन्त्री यत्नपरो भवेत्। यदि शासकः विश्वजनीनं हितं न शृणोति तदैव तादृशं परित्यजेदिति सार्वकालिकी राजनीतिः मुद्राराक्षसे निरूपिता।

**स्तुवन्ति श्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः प्रवाचः कार्पण्याद्यदवितथवाचोऽपि पुरुषाः।**
**प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा निरीहाणामीशस्तृणमिव तिरस्कारविषयः[6] ॥**

एवं मुद्राराक्षसनाटके अद्यतनोपयोगिनी मन्त्रिलक्षणनिरूपिका राजनीतिः वर्णिता। मन्त्री देशभक्तः, शास्त्रपारगः, प्रज्ञावान्, दीर्घदर्शी, शास्त्रचक्षुः. देशहितचिन्तकः च भवेदिति मुद्राराक्षसोक्तं मन्त्रिलक्षणं सार्वभौमं विश्वजनीनं च।

## उपयुक्तग्रन्थसूची

1. अर्थशास्त्रम्-(चाणक्यः)-श्रीजयलक्ष्मी पब्लिकेषन्स्, हैदराबाद्-1999।
2. काव्यलङ्कारः-(विशाखदत्तः)-MotilalBanarasi Publishers, Delhi-2011

## पादटिप्पणी

1. काव्यालङ्कारः-(भामहः)-1/2 श्लोकः
2. अर्थशास्त्रम्-षष्ठमधिकरणम्-मण्डलयोनिः-प्रथमाध्याये-क्क्ष. हृश.-531.
3. अर्थशास्त्रम्-विनयाधिकरे-नवमाध्याये-क्क्ष. हृश.-32.
4. मुद्राराक्षसम्-1/15 श्लोकः
5. मुद्राराक्षसम्-5/3 श्लोकः
6. मुद्राराक्षसम्-षष्ठाङ्के-20 श्लोकः
7. मुद्राराक्षसम्-3/16 श्लोकः

*उपाचार्यः, साहित्यविभागः*

*राष्ट्रियसंस्कृतविश्वविद्यलयः,तिरुपतिः*

ISSN 2582-2616

# स्पन्दशब्दप्रियो राजानकः कुन्तकः

डॉ.राधावल्लभशर्मा

शारदादेशस्य वरदपुत्रो राजानकः कुन्तकः प्रत्यभिज्ञादर्शनं विद्वान् आसीदिति वक्रोक्तिजीविताख्यो ग्रन्थः सुष्ठु प्रमाणीकरोति। अयमाचार्यः पण्डितमण्डलीनायको नवनिर्माणनैपुण्यनिरुपमानकविप्रकाण्डः सरस्वतीहृदयारविन्दमकरन्दबिन्दुसन्दोहसुन्दरो ध्वनिसिद्धान्तं खण्डयित्वा ध्वनेः समेषामपि भेदानामन्तर्भावं वक्रोक्तावेवाकार्षीत्। वक्रोक्तिजीविते लिलेख सः—यस्मादत्र ध्वनिकारेण व्यङ्ग्यव्यञ्जकभावोऽत्र सुतरां समर्थितः तत् किं पौनरुक्त्येन।[1]

साहित्यसौदामिन्यां गोपालभट्टेन कुन्तकाचार्यस्य प्रशंसा इत्थमुपावर्णि—

**वक्रानुरञ्जिनीमुक्तिं शुक इव मुखे वहन्।**
**कुन्तकः क्रीडति सुखं कीर्तिस्फटिकपञ्जरे॥**[2]

वक्रोक्तिजीविते नैकेषु स्थलेषु स्पन्दशब्दस्योल्लेखो व्यधायि काश्मीररत्नेन कुन्तकेन। आदौ तावद् ग्रन्थारम्भे ग्रन्थपरिसमाप्तिकामनया विघ्नविध्वंसकामो मङ्गलमाचरेदिति धिया च वृत्तिभागे मङ्गलमाचरन्नित्थमाह ग्रन्थकारः कुन्तकः—

**जगत्त्रितयवैचित्र्यचित्रकर्मविधायिनम्।**
**शिवं शक्तिपरिस्पन्दमात्रोपकरणं नुमः॥**[3]

इह परिस्पन्दशब्दस्य प्रयोगोऽकारि वक्रोक्तिजीवितकर्त्रा। शब्दोऽयं शैवागमे प्रत्यभिज्ञादर्शने वा वर्णितो वर्तते। वस्तुतः प्रत्यभिज्ञादर्शने एकमात्रं परमतत्त्वं वरीवर्ति परमशिवः। शिवोऽयम् अद्वैतो निर्विकारः सच्चिदानन्दस्वरूपश्च वर्तते। शिवदृष्टौ शिवस्वरूपमित्थं न्यरूपि विदुषा सोमानन्देन—

**आत्मैव सर्वभावेषु स्फुरन्निर्वृत्तचिद्विभुः।**
**अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः॥**[4]

शिवस्य शक्तयोऽनन्ताः। भण्यते शिवदृष्टौ—

**शक्तयश्चासङ्ख्येयाः।**[5]

परन्तु प्रामुख्येन शिवोऽयं पञ्चशक्तिषु निर्भरः। प्रोच्यते शिवदृष्टौ—

**वस्तुत एताश्शक्तयः शिवाद्भिन्ना न शक्तिशक्तिमतोरभेदन्यायात्। शक्तिशक्तिमतो भवत्यभेद-सम्बन्धः। यथा अग्निः तस्य दाहकत्वञ्च परस्परमभिन्नावेव स्तः। शक्तिमानग्निः वर्तते, शक्तिश्च वर्तते दाहकत्वमिति।**[6] तथोच्यते—

**न शिवेन विना शक्तिर्न शक्त्या रहितः शिवः।**
**तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव॥**
**परस्परस्थितौ सम्पत्फलदौ च परस्परम्।**[7]

आचार्यसोमानन्दः प्राह शिवदृष्टौ—

**न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।**
**शिवः शक्तस्तथा भावानिच्छया कर्तुमीहते॥**
**शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते।**[8]

कूर्मपुराणे गद्यते—

**शक्तिशक्तिमतोर्भेदः वदन्त्यपरमार्थतः।**
**अभेदमनुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥**[9]

परिमलो जगाद—

**आलेख्यविशेष इव गजवृषभयोर्द्वयोः प्रतिभासम्।**
**एकस्मिन्नेवार्थे शिवशक्तिविभागकल्पनां कुर्मः॥**[10]

ISSN 2582-2616

शिवस्य पञ्चशक्तय एतास्सन्ति– चित् शक्ति:, आनन्दशक्ति:, इच्छाशक्ति:, ज्ञानशक्ति:, क्रियाशक्तिश्चेति। तत्र तावत् प्रकाशरूपता चिच्छक्ति:, स्वातन्त्र्यमानन्दशक्ति:, तच्चमत्कार इच्छा-शक्ति:। चमत्कारस्तु इत्थम्बुभूषालक्षण इति, आमर्शात्मकता ज्ञानशक्ति:। ईषत्तया वेद्योन्मुखता आमर्श इति। सर्वाकारयोगित्वं क्रियाशक्तिरिति च।

शक्तियुतश्शिव एव प्रभवितुं शक्त:। शाङ्करभाष्ये वर्ण्यते—

**नहि तया विना परमेश्वरस्य स्त्रष्टत्वं सिद्ध्यति।**[11]

तस्मादभाणि भगवत्पादै: श्रीशङ्कराचार्यै:—

**शिव: शक्त्या युक्तो यदि भवति शक्त: प्रभवितुम्।**
**न चेदेवं देवो न खलु कुशल: स्पन्दितुमपि॥**[12]

तस्मादुच्यते केनचित्कविना—

**न शिवेन विना देवी न देव्या च विना शिव:।**
**नानयोरन्तरं किञ्चित् चन्द्रचन्द्रिकयोरिव॥**[13]

एवञ्च— **परोऽपि शक्तिरहित: शक्त: कर्तुं न किञ्चन।**
**शक्त: स्यात्परमेशानि शक्त्या युक्तो भवेद्यदि॥**[14]

स्पन्दपदार्थ: प्रत्यभिज्ञादर्शनस्य साधनापक्षेन सह सम्बन्धं प्रत्याख्याति। परमेश्वरस्य परमकारुणिकस्य स्वातन्त्र्यशक्तिरेव किञ्चिच्चलनात्मकत्वात् स्पन्दनाम्नाभिधीयते।

स्पन्द: परमशिवस्य नित्य: स्वभावो वरीवर्ति। **स्पन्दोऽयं शब्द: स्पदि किञ्चिच्चलने** अनेन धातुना निष्पन्नतां याति। यस्यार्थो भवति स्पन्दनम्, परिस्पन्दनं चेति। इत्थं शक्तौ यद्भवति परिस्फुरणं तदेव स्पन्द: इति नाम्ना कथ्यते। वस्तुत: शक्ते: स्पन्द एवेदं जगत्। जगत: सत्ता स्पन्दरूपैव। अतो जगदिदं परमशिवात् पृथक् न तिष्ठति। भण्यते प्रत्यभिज्ञाहृदये—

**पराशक्तिरूपा चितिरेव भगवती शक्ति: शिवभट्टारकाभिन्ना तत्तदनन्तजगदात्मना स्फुरति।**[15]

स्पन्दप्रदीपिकायाम् उत्पलाचार्यो निरूपयाञ्चक्रे स्पन्दस्वरूपमित्थम्—**स्पदि किञ्चिच्चलने इति स्पन्दनात् स्पन्द:। स्पन्दनञ्च निस्तरङ्गस्यास्य तावत् परमात्मन: युगपन्निर्विकल्पा या सर्वत्रौन्मुख्यवृत्तिता।**[16] अस्यायमभिप्रायो यत् अद्वैतस्य शिवस्यानेकतायामाभास एव स्पन्द इति।

नन्वयं स्पन्द: शक्तिधर्म उत शिवधर्म: अथवा द्वाभ्यामपि धर्म:। वस्तुत: शिवो वर्तते निष्क्रिय: शान्तश्चेति। शान्ते पदे स्पन्दस्याभाव: सर्वथा युक्तिसङ्गत एव। शक्तिमानपि शिव: स्वकीयां प्रकृतिं न परिवर्तयति। शक्तिश्च वर्तते त्रिगुणात्मिका। तस्या: स्वभावो वर्तते सर्वथा सक्रिय:। अत इच्छाज्ञान-क्रियासु भवति तस्याभिव्यक्ति:। अत: स्पन्द: शक्तावेव भवितुं शक्य: शिवे नैव। वस्तुत: शिवो वर्तते अहं भाव:। शक्तिश्च वर्तते इदं भावात्मिका। शक्ति: स्वयमेव शक्तिमान् वर्तते। इदं भाव: अहमित्यस्य वृत्तिरूप:। अहम् इत्यनेन विना इदमित्यस्य सत्ता न तिष्ठति। सृष्टिरचनायामनयोर्द्वयो: तत्त्वयो: प्राधान्यम्। अयमेव स्पन्द इति।

स्पन्दस्यास्योपचारतो भेदद्वयं विद्यते। सामान्य: स्पन्द:, विशेष: स्पन्दश्चेति। स्पन्दकारिकायामस्य सामान्यस्पन्दस्य लक्षणमित्थं निरणायि वसुगुप्तेन

**परमकारणभूतस्य सत्यस्य आत्मस्वरूपस्य अयमहमस्मि अत: सर्वं प्रभवति, अत्रैव च प्रलीयते इति प्रत्ययविमर्शात्मको निजो धर्म: सामान्यस्पन्द:**[17]**।**

अनेन सामान्यस्पन्देनास्माभि: परमशिवस्य सत्ताया: ज्ञानमनुभूयते।

विशेषस्पन्दमित्थं लक्षयामास वसुगुप्ताचार्य:—

**विशेषस्पन्द: अनात्मभूतेषु, देहादिषु, आत्माभिमानमुद्भावयन्त: परस्परभिन्नमायीयप्रमातृविषया: सुखितोऽहं दु:खितोऽहमित्यादयो गुणमया: स्पन्दप्रवाहा: संसारहेतव:।**[18]

वक्रोक्तिजीविते वक्रोक्तिसिद्धान्तप्रतिष्ठापक आचार्य: कुन्तक: स्पन्दशब्दस्य भूयांसं प्रयोगं चकार। ऐदम्प्राथम्येन **तत्र तावत् स्वभावार्थे अस्य प्रयोग:—**

**1. काव्यमार्गे अर्थ: कीदृशो भवितव्य इत्यस्मिन् प्रसङ्गे—**

ISSN 2582-2616

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**

**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥**[19]

इत्यत्र अर्थश्च वाच्यलक्षणः कीदृशः? काव्ये यः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः काव्यार्थविदस्तेषामाह्लादमानन्दं करोति यस्तेन स्वस्पन्देनात्मीयेन स्वभावेन सुन्दरः सुकुमार इति।

तदेतदुक्तं भवति—**यद्यपि पदार्थस्य नानाविधधर्मखचितत्वं संभवति तथापि तथाविधेन धर्मेण सम्बन्धः समाख्यायते यः सहृदयहृदयाह्लादमाधातुं क्षमते। तस्य च तदाह्लादसामर्थ्यं संभाव्यते येन काचिदेव स्वभावमहत्ता रसपरिपोषाङ्गत्वं वा व्यक्तिमासादयति।**[20]

**2.कविकौशलसन्दर्भे—**

**वक्रतायाः प्रकाराणामौचित्यगुणशालिनाम्।**

**एतदुत्तेजनायालं स्वस्पन्दमहतामपि॥**[21]

अत्रागतस्य स्पन्दशब्दस्य स्वभावार्थे प्रयोगो रमणीयतमः।

**3.रीतिविभाजनं खण्डयित्वा स्वमतोपस्थापनसन्दर्भे—**

**तया च तदुभयपरिस्पन्दसुन्दरव्युत्पत्त्युपार्जनमाचरति।**[22]

**4.साहित्यपरिभाषाप्रसङ्गे–**

**सा काप्यवस्थितिस्तद्विदानन्दस्पन्दसुन्दरा।**

**अत्र स्पन्दशब्दस्यार्थः स्वभावो वर्तते॥**[23]

**5.स्वभावोक्त्यलङ्कारनिरूपणप्रसङ्गे–**

**अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः।**

**अलङ्कार्यतया तेषां किमन्यदवतिष्ठते॥**[24]

येषामलङ्कारकृतामलङ्कारकाराणां स्वभावोक्तिरलङ्कृतिः, या स्वभावस्य पदार्थधर्मलक्षणस्य परिस्पन्दस्य उक्तिरभिधा सैवालङ्कृतिरलङ्करणमिति प्रतिभाति।

**6.पदपूर्वार्धवक्रतायाः पर्यायप्रकारे कारणमिति प्रसङ्गे—**

यद्यपि वर्ण्यमानस्य वस्तुनः प्रकारान्तरोल्लासकत्वेन व्यवस्थितिस्तथापि परिस्पन्दसौन्दर्यसम्पदेव सहृदयहृदयहारितां प्रतिपद्यते।[25]

**7.भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहम् इत्यस्मिन्मेघदूतपद्ये अबलाश्रेणिमोक्षोत्सुकानि इत्यस्य शब्दस्य व्याख्यानसन्दर्भे—**

**अत्र यः पदार्थपरिस्पन्दः कविनोपनिबद्धः प्रबन्धस्य मेघदूतत्वे परमार्थतः स एव जीवितमिति सुतरां सहृदयहृदयह्लादकारीति।**[26]

**8. दंष्ट्रापिण्डेषु सद्यः इत्यस्य पद्यस्य व्याख्याकाले—**

**स्वभावसम्भविनस्तत्परिस्पन्दान्तरस्य इत्यत्र परिस्पन्दस्य स्वभावार्थे प्रयोग इति।**[27]

**9. द्वयं गतं सम्प्रति शोचनीयतां कुमारसम्भवस्यास्य पद्यस्य व्याख्यानसन्दर्भे—**

**यस्मात्प्रतिभायां तत्कालोल्लेखितेन केनचित्परिस्पन्देन परिस्फुरन्तः पदार्थाः प्रकृतप्रस्तावसमुचितेन केनचिदुत्कर्षेण वा समाच्छादितस्वभावाः।**[28]

अत्र परिस्पन्दशब्दस्य तात्पर्यार्थः स्वभाव एवेति।

**10. वाक्यवक्रतावैचित्र्यमासूत्रयितुं वाच्यस्य वर्णनीयतया प्रस्तावाधिकृतस्य वस्तुनो वक्रतास्वरूपनिरूपणसन्दर्भे—**

**उदारस्वपरिस्पन्दसुन्दरत्वेन वर्णनम्।**

**वस्तुनो वक्रशब्दैकगोचरत्वेन वक्रता॥**[29]

कारिकायामत्रागतस्य परिस्पन्दशब्दस्य व्याख्यामित्थं प्राकाशयत् कारिकाकारो राजानकः कुन्तकः—

उदारः सोत्कर्षः सर्वातिशायी यः स्वपरिस्पन्दः स्वभावमहिमा तस्य सुन्दरत्वं, सौकुमार्या–तिशयः।

**11. वक्रतास्वरूपनिरूपणावसरे—**

अयमपरः प्रकारो यत्र स्वपरिस्पन्दकाष्ठाधिरूढैः सातिशयं वस्तु वचसामगोचर इति प्रथयितुं सर्वनाम्ना समाच्छाद्य तत्कार्याभिधायिना तदतिशयवाचिना वाक्यान्तरेण समुन्मील्यते।[30]

**12. स्वभावोक्त्यलङ्कारखण्डनसन्दर्भे—**

उच्यते वक्रोक्तिजीविते—

**स्वभावव्यतिरेकेण वक्तुमेव न युज्यते।**
**वस्तु तद्रहितं यस्मान्निरूपाख्यं प्रसज्यते॥**[31]

कारिकायामस्यामागतस्य स्वभावव्यतिरेकेण पदस्यास्य पर्यायमित्थं वर्णयामास वृत्तौ कुन्तकाचार्यः—

**स्वभावव्यतिरेकेण स्वपरिस्पन्दं विना निःस्वभावं वक्तुमभिधातुमेव न युज्यते न शक्यते।**[32]

**13. स्वभावोक्त्यलङ्कारखण्डनसन्दर्भे—**

**भूषणत्वे स्वभावस्य विहिते भूषणान्तरे।**
**भेदावबोधः प्रकटस्तयोरप्रकटोऽथवा॥**[33]

**अत्रागतस्य स्वभावस्य पदस्यास्य व्याख्यामित्थं कुर्वते ग्रन्थकारः—भूषणत्वे स्वभावस्यालङ्कारत्वे स्वपरिस्पन्दस्य इति।**[34]

**14. अप्रस्तुतप्रशंसालङ्कारव्याख्यानकाले—द्विविधो हि प्रस्तुतः पदार्थः सम्भवति- वाक्यान्तर्भूत-पदमात्रसिद्धः सकलवाक्यव्यापकार्थो विविधस्वपरिस्पन्दातिशयविशिष्टप्राधान्येन वर्तमानश्च।**[35]

**15. ससन्देहालङ्कारसन्दर्भे—**

**यस्मिन्नुत्प्रेक्षितं रूपं सन्देहमेति वस्तुनः।**
**उत्प्रेक्षान्तरसद्भावाद् विच्छित्यै प्रतिभावशात्॥**[36]

अस्यायं फलितार्थः-

**यस्मिन्नलङ्करणे सम्भावनानुमानात् साम्यसमन्वयाच्च स्वरूपान्तरसमारोपद्वारेणोत्प्रेक्षितं प्रतिभालिखितं रूपं पदार्थपरिस्पन्दलक्षणं सन्देहमेति संशयमारोहतीति।**[37]

**16. विचित्रमार्गस्य लक्षणप्रसङ्गे—**

**स्वभावः सरसाकूतो भावानां यत्र बध्यते।**
**केनापि कमनीयेन वैचित्र्यणोपबृंहितः॥**[38]

कारिकायामस्यां समागतस्य स्वभावः पदमिदमित्थं व्याख्याति वृत्तिकारो राजानकः कुन्तकः-

**यत्र यस्मिन् भावानां स्वभावः स्वपरिस्पन्दः सरसाकूतो रसनिर्भराभिप्राय इति।**[39]

**17. औचित्यगुणस्वरूपसन्दर्भे—**

**यत्र वक्तुः प्रमातुर्वा वाच्यं शोभातिशायिना।**
**आच्छाद्यते स्वभावेन तदप्यौचित्यमुच्यते॥**[40]

अत्रागतस्य स्वभावेन इति पदस्यास्य व्याख्यानमित्थमाचष्टे वक्रोक्तिजीवितकारः-

**यत्र यस्मिन् वक्तुरभिधातुः प्रमातुर्वा श्रोतुर्वा स्वभावेन स्वपरिस्पन्देन वाच्यमभिधेयम्।**[41]

18. उत्प्रेक्षालङ्कारस्य भेदसन्दर्भे-

**प्रतिभासात्तथा बोद्धुः स्वस्पन्दमहिमोचितम्।**
**वस्तुनो निष्क्रियस्यापि क्रियायां कर्तृतार्पणम्॥**[42]

अत्रागतस्य स्वस्पन्दमहिमोचितम् अस्येत्थं व्याख्यानम्—

तस्य पदार्थस्य यः स्वस्पन्दमहिमा स्वभावोत्कर्षस्तस्योचितमनुरूपम्।

19. वक्रतानिरूपणावसरे—

**यस्मात् स्वाभाविकसौकुमार्यप्राधान्येन वर्ण्यमानस्योदारस्वपरिस्पन्दमहिम्नः सहजच्छायातिरोधानविधायिप्रतीत्यन्तरापेक्षम-लङ्करणकल्पनं नोपकारितां प्रतिपद्यते।**[43]

20. व्यतिरेकालङ्कारप्रसङ्गे—

**सति तच्छब्दवाच्यत्वे धर्मसाम्येऽन्यथास्थिते।**
**व्यतिरेचनमन्यस्मात् प्रस्तुतोत्कर्षसिद्धये॥**[44]

ISSN 2582-2616

अत्रागतस्य धर्मशब्दस्येत्थं व्याख्यानं प्रस्तुतमस्ति-धर्मसाम्ये सत्यपि परस्परस्पन्दसादृश्ये विद्यमाने।

इत्थमेतेषु स्थलेषु श्रीमद्राजानककुन्तकाचार्येण स्वभावस्य पर्यायार्थे स्पन्दस्य, स्पन्दस्य च पर्यायार्थे स्वभावस्य वर्णनं समपादि।

**स्पन्दशब्दस्य धर्मपर्यायरूपे संप्रयोगः-**

**1. रूढिवैचित्र्यवक्रताया लक्षणप्रसङ्गे—**

**यत्र रूढेरसंभाव्यधर्माध्यारोपगर्भता।**

**सद्धर्मातिशयारोपगर्भत्वं वा प्रतीयते।।**[45]

लक्षणेऽस्मिन् समागतस्य धर्मः इति पदस्येत्थं व्याख्यानम्—**यत्र यस्मिन् विषये रूढिशब्दस्य असम्भाव्यः सम्भावयितुमशक्यो यो धर्मः कश्चित्परिस्पन्दस्तस्याध्यारोपः।**[46]

संश्चासौ धर्मस्य सद्धर्मः विद्यमानः पदार्थस्य परिस्पन्दः।

**2. अतिशयोक्त्यलङ्कारलक्षणप्रसङ्गे—**

**यस्यामतिशयः कोऽपि विच्छित्त्या प्रतिपाद्यते।**

**वर्णनीयस्य धर्माणां तद्विदाह्लाददायिनाम्।।**[47]

कारिकायामागतस्य वर्णनीयस्य धर्माणाम् इति शब्दस्य पर्यायमित्थं लक्षयामास—

**प्रस्तावाधिकृतस्य वस्तुनः स्वभावानुसम्बन्धिनां परिस्पन्दानाम्।**[48]

3. उपमालङ्कारस्वरूपनिरूपणावसरे—

**विवक्षितपरिस्पन्दमनोहारित्वसिद्धये।**

**वस्तुनः केनचित्साम्यं तदुत्कर्षवतोपमा।।**[49]

विवक्षितो वक्तुमभिप्रेतो योऽसौ परिस्पन्दः कश्चिदेव धर्मविशेषः।

4. एकत्रवर्णनीयवस्तुविषयविभागविषये—

**भावानामपरिम्लानस्वभावौचित्यसुन्दरम्।**

**चेतनानां जडानां च स्वरूपं द्विविधं स्मृतम्।।**[50]

अत्रागतस्य स्वभावशब्दस्यार्थमित्थं करोति—**अपरिम्लानः प्रत्यग्रपरिपोषपेशलो यः स्वभावः पारमार्थिको धर्मस्तस्येत्यादि।**[51]

5. प्रकरणवक्रतायाः चतुर्थभेदावसरे—

**अविकलाभिनयोल्लासशृङ्गाररूपकादिपरिस्पन्दभ्राजिष्णुः।**[52]

6.कविकौशलोपक्रमे—

**तस्मादनेन न्यायेन सर्वातिशायिनः स्वाभाविकसौन्दर्यलक्षणस्य पदार्थपरिस्पन्दस्यालङ्कार्यत्वमेव युक्तियुक्ततामालम्बते।**[53]

7. दीपकालङ्कारविवेचनविषये—

**औचित्यावहमम्लानं तद्विदाह्लादकारणम्।**

**अशक्तं धर्ममर्थानां दीपयद्वस्तु दीपकम्।।**[54]

अत्रागतस्य धर्ममिति शब्दस्येत्थं व्याख्यानम् किं कस्येत्यभिधत्ते—धर्मं परिस्पन्दविशेषमर्थानां वर्णनीयानाम्।

इत्थं विभिन्नेषु स्थलेषु कुन्तकाचार्येण धर्मस्य पर्यायरूपे स्पन्दस्य, स्पन्दस्य च पर्यायरूपे धर्मस्य प्रयोगो विहितः।

**परिस्पन्दस्य व्यापारपर्यायरूपे प्रयोगः-**

1. काव्यप्रयोजनविषये—

**व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः।**

**सत्काव्याधिगमादेव नूतनौचित्यमाप्यते।।**[55]

ISSN 2582-2616

अत्रागतस्य परिस्पन्दशब्दस्य व्याख्यामित्थं प्रस्तौति ग्रन्थकारः—

**व्यवहारो लोकवृत्तं तस्य परिस्पन्दो व्यापारः क्रियाक्रमलक्षणस्तस्य सौन्दर्यं रामणीयकम्।**[56]

2. व्यतिरेकालङ्कारस्य तृतीयभेदस्य निरूपणावसरे—

**लोकप्रसिद्धसामान्यपरिस्पन्दाद्विशेषतः।**
**व्यतिरेको यदेकस्य स परस्तद्विवक्षया॥**[57]

अत्रागतस्य परिस्पन्दशब्दस्य व्याख्यानमित्थं व्याख्यायि ग्रन्थकर्त्रा—

**लोकप्रसिद्धो जगत्प्रतीतः सामान्यभूतः सर्वसाधारणो यः परिस्पन्दः व्यापारः तस्मादिति।**[58]

3. अतिशयोक्त्यलङ्कारप्रसङ्गे—

**यस्यामतिशयः कोऽपि विच्छित्या प्रतिपाद्यते।**
**वर्णनीयस्य धर्माणां तद्विदाह्लाददायिनाम्॥**[59]

**कस्य- वर्णनीयस्य धर्माणां, प्रस्तावादिकृतस्य वस्तुनः स्वभावानुसम्बन्धिनां परिस्पन्दानाम्।**[60]

4. एकदेशविवर्तिरूपकव्याख्यानप्रसङ्गे—

**यद्वाक्यस्य यत्कस्मिंश्चिदेव स्थाने स्वपरिस्पन्दनसमर्पणात्मकरूपणमादधाति क्वचिदेवेति तदेकदेशविवर्तिरूपकम्।**[61]

**5. इदमेव परिस्पन्दमाहात्म्यात्सहृदयहारितां प्रतिपन्नमिति साहित्यस्योपयुज्यमानता।**[62]

अत्र परिस्पन्दशब्दस्यार्थो भवति व्यापारः।

6.सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी उदाहरणस्यास्य व्याख्यानावसरे—

**अत्रासत्प्रतिक्षणं कियदद्य गन्तव्यमित्यभिधानलक्षणः परिस्पन्दो न स्वभावमहत्तामुन्मीलयति।**[63]

7. तामभ्यगच्छद् रुदितानुसारी इत्यस्मिन् रघुवंशपद्यस्य व्याख्यानकाले—

**अत्र कोऽसौ मुनिर्वाल्मीकिरिति पर्यायपदमात्रे वक्तव्ये परमकारुणिकस्य निषादनिर्भिन्नशकुनिसन्दर्शनमात्रसमुत्थितः शोकः श्लोकत्वमभजत यस्येति तस्य तदवस्थजनकराजपुत्रीदर्शनविवशवृत्तेरन्तः करणपरिस्पन्दः करुणरसपरिपोषाङ्गतया सहृदयहृदयाह्लादहारी कवेरभिप्रेतः।**[64]

विश्लेषणानेन परिस्पन्दस्य व्यापारार्थे प्रयोगो विज्ञातो भवतीति।

**स्पन्दस्य विलसितपर्यायरूपे प्रयोगः-**

1. ग्रन्थारम्भेऽभितदेवतानमस्कारप्रसङ्गे—

**वन्दे कवीन्द्रवक्त्रेन्दुलास्यमन्दिरनर्तकीम्।**
**देवीं सूक्तिपरिस्पन्दसुन्दराभिनयोज्ज्वलाम्॥**[65]

पद्येऽस्मिन् समागतस्य सूक्तिपरिस्पन्दस्य व्याख्यामित्थमाचष्टते—

**सूक्तिपरिस्पन्दाः सुभाषितविलसितानि।**[66]

2. प्रत्ययवक्रताया द्वितीयभेदस्य व्याख्यानावसरे—

**आगमादि परिस्पन्दसुन्दरः शब्दवक्रताम्।**
**परः कामपि पुष्णाति बन्धच्छायाविधायिनीम्॥**[67]

अत्रेत्थं परिस्पन्दस्य व्याख्यानम्—**आगमो मुमादिरादिर्यस्य स तथोक्तः, तस्यागमादेः परिस्पन्दः स्वविलसितं तेन सुन्दरः सुकुमारः।**[68]

3.कविकौशलप्रसङ्गे—

**आसंसारं कविपुङ्गवैः प्रतिदिवससंगृहीतसारोऽपि।**
**अद्याप्यभिन्नमुद्र इव जयति वाचां परिस्पन्दः॥**[69]
**( आसंसारं कइपुंगवेहि पडिदिअहगहिअसारो वि।**

**अज्जवि अभिन्नमुद्दो व्व जअइ वाआं परिष्फंदो ॥ )**

4.साहित्यपरिभाषाप्रसङ्गे—

**पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते।**[70]

अत्रागतस्य परिस्पन्दशब्दस्यार्थो विलास एवेति।

एतादृशेषु स्थलेषु कुन्तकाचार्येण परिस्पन्दस्य प्रयोगो विलसितार्थे प्रायोजि।

**परिस्पन्दस्य पर्यायरूपे स्वरूपशब्दस्य प्रयोगः-**

1. **चेतनानां जडानाञ्चस्वरूपं द्विविधं स्मृतम्।**[71] **अत्रागतस्य स्वरूपमित्यस्मिन् विषये वावदीति ग्रन्थकारः—भावानां वर्ण्यमानवृत्तीनां स्वरूपं परिस्पन्दः।**[72]

2. पदार्थस्वरूपविश्लेषणसन्दर्भे—

**धर्मादिसाधनोपायपरिस्पन्दनिबन्धनम्।**
**व्यवहारोचितं चान्यल्लभते वर्णनीयताम्॥**[73]

अत्रागतस्य परिस्पन्दशब्दविशेषस्य तात्पर्यार्थं विवृण्वनेत्थमाह ग्रन्थकारः—

**धर्मादेश्चतुर्वर्गस्य साधने सम्पादने उपायभूतो यः परिस्पन्दः स्वविलसितं तदेव निबन्धनं यस्य तत्तथोक्तम्।**[74]

3.अस्याः सर्गविधौ इत्यस्य पद्यस्य फलितार्थनिरूपणसन्दर्भे—

**अत्र कान्तायाः कान्तिमत्त्वमसीमविलाससम्पदां पदं च रसवत्त्वमसामान्यासौष्ठवं च सौकुमार्यं प्रतिपादयितुं प्रत्येकं तत्परिस्पन्दप्राधान्यसमुचितसम्भावनानुमानमाहात्म्यात् पृथक् पृथगपूर्वमेव निर्माणमुत्प्रेक्षितमिति।**[75]

**स्पन्दशब्दस्य सञ्चरणार्थे प्रयोगः-**

**ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।**
**दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥**[76]

अत्र परिस्पन्दस्यार्थः सञ्चरणमिति।

**परिस्पन्दस्य स्फुरितत्वार्थे प्रयोगः-**

सौभाग्यगुणं विवेचयता गुणोऽयमस्माभिः कथं कीदृशं वा सम्पादितव्य इत्यस्मिन् विचारे—

**सर्वसंपत्परिस्पन्दसंपाद्यं सरसात्मनाम्।**
**अलौकिकचमत्कारकारि काव्यैकजीवितम्॥**[77]

अत्रागतस्य परिस्पन्दशब्दस्यास्य व्याख्यानमित्थमकारि कुन्तकाचार्येण-

**सर्वसंपत्परिस्पन्दसंपाद्यं सर्वस्योपादेयराशेर्या संपत्तिरनवद्यताकाष्ठा तस्याः परिस्पन्दः स्फुरितत्वं तेन संपाद्यं निष्पादनीयम्।**[78]

इत्थं स्पन्दः परिस्पन्दो वा विभिन्नानां शब्दानां पर्यायरूपे सुप्रयुक्तो वर्तते। एते सर्वेऽपि प्रयोगाः दार्शनिकार्थे सङ्गता वर्तन्ते।

**स्पन्दशब्दस्य सौन्दर्यार्थे प्रयोगः-**

1.सुकुमारमार्गस्यलक्षणक्रमे

**यत् किञ्चनापि वैचित्र्यं तत्सर्वं प्रतिभोद्भवम्।**
**सौकुमार्यपरिस्पन्दस्यन्दि यत्र विराजते॥**[79]

**अत्रागतस्य परिस्पन्दशब्दस्य व्याख्यानमित्थं प्रदर्श्यते—सौकुमार्यमाभिजात्यं तस्य परिस्पन्दस्तद्विदाह्लादकारित्वलक्षणं रामणीयकं तेन स्पन्दते रसमयं सम्पद्यते यत्तथोक्तम्।**[80]

**माहात्म्यार्थे स्पन्दशब्दस्य प्रयोगः-**

1. प्रकरणवक्रतायाः तृतीयभेदव्याख्यानावसरे—

**प्रबन्धस्यैकदेशानां फलबन्धानुबन्धवान्।**
**उपकार्योपकर्तृत्वपरिस्पन्दः परिस्फुरत्॥**[81]

ISSN 2582-2616

उपकार्योपकर्तृत्वपरिस्पन्दः, अनुग्राह्यानुग्राहकत्वमहिमेति।

2.प्रकरणवक्रतामवतारयन् वदति कुन्तकाचार्यः—

**यत्र निर्यन्त्रणोत्साहपरिस्पन्दोपशोभिनी।**
**व्यावृत्तिर्व्यवहर्तॄणां स्वाशयोल्लेखशालिनी॥**[82]

लक्षणेऽस्मिन् समागतस्य परिस्पन्दशब्दस्येत्थं व्याख्यानं प्रास्तौद् ग्रन्थकारः—

**निर्यन्त्रणोत्साहपरिस्पन्दोपशोभिनी निरर्गलव्यवसायस्फुरितस्फाराविच्छित्तिः।**[83]

**उपसंहारः—**

1. शक्तेः स्वभावो वर्तते स्पन्दः। यथा हृदयस्य स्पन्दो हृदयस्वभाव एव भवति अन्यथा स्पन्दसमाप्त्यवसरे हृदयस्य जीवितसत्ताऽपि समाप्तिं गता स्यादिति। अतः कुन्तकाचार्यस्य स्वभावार्थेऽस्य प्रयोगो नितान्तं सङ्गत एव।

**2. स्पन्दस्य धर्मस्य पर्यायार्थे प्रयोगोऽपि सुतरां साधुत्वमेव भजते। स्पन्दकारिकायामाह श्रीरामकण्ठाचार्येण टीकाकृता—स्पन्दशब्दश्चायं स्वस्वभावपरामर्शमात्रस्य नित्यस्य शून्यताव्यतिरेचनकारणभूतस्य तावन्मात्रसंरम्भात्मनः शक्त्यपराभिधानस्य पारमेश्वरस्य धर्मस्य किञ्चिच्चलनात् स्पन्द इति।**[84]

कुन्तकाचार्यस्यायं प्रयोगोऽपि सुष्ठु एवेति।

3. स्पन्दो व्यापार एव। किञ्च व्यापारो भवति क्रियाक्रमलक्षणः। किञ्चिच्चलनमेव व्यापारः।

इत्थं सर्वेऽपि स्पन्दपर्यायाः प्रासङ्गिकाः सार्थकाश्चेति।

इत्थं वक्रोतिजीवितग्रन्थाध्ययनेदं सुसिद्धं यत् स्पन्दशब्दप्रयोगे राजानककुन्तकस्य महान् कश्चन विशेषानुरागः। वस्तुतः प्रखरप्रतिभाप्रवाहपरिस्पन्दमहिम्ना सतताभ्यासस्वभावगरिम्णा व्युत्पत्ति-प्रतिपत्तिप्रतीतिनिष्ठया च सूरयः कविकर्मकौशलं चारुतया चमत्कारवैचित्र्यमासूत्रयन्तीति प्रसिद्धिः। इमामेव पद्धतिमाश्रित्य भारतस्फारहीरायमाणेन प्रथितचिन्तकेन कुन्तकेनेह नैजं सर्वमभिमतं प्राकाशीत्यमन्दानन्दविषयः।

अनेन प्रतिभासंरम्भजनितसकलसामग्रीसमुन्मीलितं सहृदयहृदयाह्लादकारि स्पन्दपदमत्र यथामति व्याख्यायि।

## पादटिप्पण्यः

1. वक्रोक्तिजीवितम्-भूमिकाभागः
2. साहित्यसौदामिनी-प्रस्तावनाभागः
3. वक्रोक्तिजीवितम्-1/1
4. शिवदृष्टिः-1/2
5. तत्रैव-प्रथमाह्निकम्
6. तत्रैव
7. तत्रैव-प्रस्तावनाभागः
8. तत्रैव-3/2-3
9. कूर्मपुराणम्
10. महार्थमञ्जरी(परिमलव्याख्या)-28
11. ब्रह्मसूत्रम्-शाङ्करभाष्यम्-1/4/3
12. सौन्दर्यलहरी-1
13. तत्रैव-भूमिकाभागः
14. तत्रैव
15. प्रत्यभिज्ञाहृदयम्-सूत्रसंख्या-32
16. स्पन्दप्रदीपिका-पृ-2-3
17. स्पन्दकारिका-प्रथमो निष्यन्दः
18. तत्रैव
19. वक्रोक्तिजीवितम्-1/9
20. तत्रैव-प्रथमोन्मेषः
21. तत्रैव-3/23
22. तत्रैव-तृतीयोन्मेषः
23. तत्रैव-1/36
24. तत्रैव-1/11
25. तत्रैव-तृतीयोन्मेषः
26. तत्रैव-प्रथमोन्मेषः
27. तत्रैव-द्वितीयोन्मेषः
28. तत्रैव
29. तत्रैव-3/1
30. तत्रैव-द्वितीयोन्मेषः
31. तत्रैव-1/12
32. तत्रैव-प्रथमोन्मेषः
33. तत्रैव-1/14
34. तत्रैव-प्रथमोन्मेषः
35. तत्रैव-तृतीयोन्मेषः
36. तत्रैव-3/41
37. तत्रैव-तृतीयोन्मेषः
38. तत्रैव-1/41
39. तत्रैव- प्रथमोन्मेषः
40. तत्रैव-1/54

ISSN 2582-2616

41. तत्रैव-प्रथमोन्मेषः
42. तत्रैव-1/26
43. तत्रैव-तृतीयोन्मेषः
44. तत्रैव-3/33
45. तत्रैव-2/8
46. तत्रैव-द्वितीयोन्मेषः
47. तत्रैव-3/27
48. तत्रैव-तृतीयोन्मेषः
49. तत्रैव-3/28
50. तत्रैव-3/5
51. तत्रैव-तृतीयोन्मेषः
52. तत्रैव-चतुर्थोन्मेषः
53. तत्रैव-तृतीयोन्मेषः
54. तत्रैव-3/1
55. तत्रैव-1/4
56. तत्रैव-प्रथमोन्मेषः
57. तत्रैव-3/35
58. तत्रैव-तृतीयोन्मेषः
59. तत्रैव-3/
60. तत्रैव-तृतीयोन्मेषः
61. तत्रैव
62. तत्रैव-प्रथमोन्मेषः
63. तत्रैव
64. तत्रैव
65. तत्रैव-1/1
66. तत्रैव-प्रथमोन्मेषः
67. तत्रैव-1/
68. तत्रैव-तृतीयोन्मेषः
69. तत्रैव-3/16
70. तत्रैव
71. तत्रैव-तृतीयोन्मेषः
72. तत्रैव
73. तत्रैव-3/10
74. तत्रैव-तृतीयोन्मेषः
75. तत्रैव
76. तत्रैव-1/19
77. तत्रैव-1/56
78. तत्रैव- प्रथमोन्मेषः
79. तत्रैव-1/29
80. तत्रैव- प्रथमोन्मेषः
81. तत्रैव-4/5
82. तत्रैव-4/1
83. तत्रैव-चतुर्थोन्मेषः
84. स्पन्दकारिका-भूमिकाभागः

## सन्दर्भग्रन्थसूची


1. वक्रोक्तिजीवितम्-सुशीलकुमारदे, F.K.L. Mukhopadhyay,Calcutta, द्वितीयसंस्करणम्, 1928
2. सौन्दर्यलहरी-श्रीमती विनोद अग्रवाल, ईस्टर्न बुक लिंकर्स, दिल्ली, प्रथमसंस्करणम्, 1985
3. स्पन्दकारिका-जे.जी चट्टोपाध्यायः, श्रीनगर, काश्मीर, 1913
4. प्रत्यभिज्ञाहृदयम्-जयदेवसिंहः, मोतीलालबनारसीदासः, दिल्ली, प्रथमसंस्करणम्-1973
5. स्पन्दप्रदीपिका-Mark Dyczkowski, वाराणसी, 2000
6. शिवदृष्टिः-पण्डितमधुसूदनकौलशास्त्री, काश्मीर-श्रीनगर, 1936
7. कूर्मपुराणम्-गीताप्रेस, गोरखपुर,1982
8. काव्यप्रकाशः-आचार्यविश्वेश्वरसिद्धान्तशिरोमणिः, ज्ञानमण्डललिमिटेड, वाराणसी, 2005


*सहायकाचार्यः, साहित्यविभागे, हरियाणासंस्कृतविद्यापीठम्*
*( नवदेहलीस्थकेन्द्रीयसंस्कृतविश्वविद्यालयेन सम्बद्धम् ) बघौला, पलवलम्, हरियाणा*

ISSN 2582-2616

# अभिज्ञानशाकुन्तलगतवैशिष्ट्यानुशीलनम्

**उप प्रा. भरतभट्टराईः**

**शोधसारः**-महाकविकालिदासविरचितानि अनेकानि काव्यरत्नानि सन्ति। तेषु अभिज्ञानशाकुन्तलनामकस्य नाटकस्य सर्वोच्चस्थानमस्ति। सप्तसु अङ्केषु विभक्तेऽस्मिन् नाटके विशेषतया दुष्यन्तशकुन्तलयो रागात्मकवर्णनं प्राप्यते। तथा च दुष्यन्तमृगयावर्णन-तपोवनवर्णन-कण्वर्षिवर्णनादयो विषया वर्णिताः सन्ति। वैदेशिकैः गेटेमहोदयादिभिश्च संस्तुतेऽस्मिन् नाटके नैकानि वैशिष्ट्यानि सन्ति-रसवैचित्र्यम्, ध्वनिवैचित्र्यम्, सूक्तिमाधुर्यम्, सुभाषिश्लोकाः, पात्राणां वाक्पटुता, शब्दालङ्कारप्रयोगः, अर्थालङ्कारप्रयोग इत्यादीनि। एतैः वैशिष्ट्यैः समुपेतत्वाद् नाटकमिदं सहृदयहृदयाह्लादकमस्ति। एवञ्च निष्कर्षेऽपि इमं सर्वतो भावेन पठनीयमिति प्रतिपादितमस्ति।

**शब्दकुञ्जिका**-रसः, ध्वनिः, अलङ्कारः, सूक्तिः, प्रकृतिः।

**1. विषयप्रवेशः**-को नाम सचेता नो जानीते महाकवेः कालिदासस्य नाम। लोकाय तेन तादृशानि कृतिरत्नानि प्रदत्तानि येषां माध्यमेन अद्यावधि स जीवन्नस्ति। तस्य काव्याध्ययनेन ज्ञायते यद् अनेन कविना काव्ये नाट्ये च सर्वत्र वैदुष्यं प्रस्तुतमस्ति। अनेन रचितेषु ग्रन्थेषु अभिज्ञानशाकुन्तलनामकस्य नाटकस्य स्थितिः सर्वातिशायिनी वर्तते। अधुनास्य प्रसारो न केवलमार्यावर्ते पाश्चात्यादिदेशेष्वपि विशेषतया दृश्यते। जर्मनदेशवासी महाकविः गेटेमहोदयो नाटकमिदमित्थं प्रशंसति-

**वासन्तं कुसुमं फलञ्च युगपद् ग्रीष्मस्य सर्वं च यत् यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम्।**
**एकीभूतमभूतपूर्वमथवा स्वर्लोकभूर्लोकयोरैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम्।।** -(विष्णुमिरीरु)

(कालिदासः,2056, पृ.88 भूमिका)

सप्तसु अङ्केषु विभक्तेऽस्मिन् नाटके दुष्यन्तशकुन्तलयोः प्रेमप्रसङ्गस्य विशेषतया चर्चा विद्यते। तस्मिन् क्रमे राज्ञो दुष्यन्तस्य मृगयावर्णनम्, तपस्विलोकसत्कृतस्य तस्य तपस्विलोकं प्रति उच्चादरस्य वर्णनम्, शकुन्तलेच्छानुरूपस्य सखीचातुर्यस्य वर्णनम्, शकुन्तलां प्रति महर्षेः कण्वस्य यथोचितव्यवहारस्य वर्णनं तथा च पतिगृहं प्रयान्त्याः शकुन्तलायाः सुखदुःखयो वर्णनञ्च क्रमशः समागतानि सन्ति। एतेषां वर्णनसन्दर्भे कविना माधुर्यपूर्णा शैली स्वीकृता दृश्यते। आदौ मध्ये तथान्ते सहृदयहृदयाकर्षकेण गुणेन समुपेतेऽस्मिन् नाटके कानि तादृशानि वैशिष्ट्यानि सन्ति येषां कारणेन नाटकस्य प्रसिद्धिः विपुलास्ति ? इति जिज्ञासायाः समाधानाय अभिज्ञानशाकुन्तलगतानां वैशिष्ट्यानामनुशीलनमत्र विधीयते।

**2. शोधसमस्या**-संस्कृतनाटकेषु सर्वोत्तमस्याभिज्ञानशाकुन्तलस्य प्रसिद्धिं प्रति कानि वैशिष्ट्यानि हेतुभूतानि सन्ति ? इति समस्यास्ति।

**3. शोधोद्देश्यम्**-उपर्युक्तशोधसमस्यासमाधानाय अभिज्ञानगत-वैशिष्ट्यानुशीलनमेकं मुख्यमुद्देश्यमस्ति।

**4. शोधविधिः**-शोधकार्यस्य सम्पादनाय सामग्रीसङ्कलने पुस्तकालयविधिः, प्राप्तसामग्रीव्यवस्थापने निगमनविधिः विश्लेषण-विधिश्च, पादटिप्पणीक्रमे ग्रन्थप्रकरणश्लोकसंख्यादिसूचकः परम्परागतो विधिः, सामान्यायां स्थितौ लेखकमिति (ए.पी.ए.) विधिश्चानुसरिष्यन्ते।

**5. अध्ययनस्य क्षेत्रं सीमाङ्कनञ्च**-आनन्दवर्धनादिभिः साहित्यशास्त्रिभिः प्रतिपादितानां तथा अभिज्ञानशाकुन्तलस्य व्याख्यानात्मकानां ग्रन्थानामध्ययनं क्षेत्रमस्ति। शोधशीर्षकानुसारं केवलमभिज्ञानशाकुन्तलगतवैशिष्ट्यानुशीलनं सीमास्ति।

**6. सैद्धान्तिकपर्याधारः**-अत्र सैद्धान्तिकपर्याधारत्वेन आनन्दवर्धनादिभिः प्रतिपादिताः साहित्यिकसिद्धान्ता विशेषतया स्वीक्रियन्ते।

**7. अभिज्ञानशाकुन्तलगतवैशिष्ट्यानि**-अभिज्ञानशाकुन्तले नैकानि वैशिष्ट्यानि सन्ति। येषां प्रभावादस्य लोकप्रियता प्रवर्धमानास्ति। लेखेऽस्मिन् दृष्टानि कानिचिद् वैशिष्ट्यानि प्रस्तूयन्ते-

क. रसवैचित्र्यम् ख. ध्वनिवैचित्र्यम्

ग. सूक्तिमाधुर्यम् घ. सुभाषितश्लोकाः

ङ पात्राणां वाक्पटुता च. प्रकृतिचित्रणम्

छ. शब्दालङ्कारमाधुर्यम् ज. अर्थालङ्कारमाधुर्यम्

झ. छन्दोविधानम् ञ. आदर्शपितृत्वम्

ट. राज्ञो दुष्यन्तस्याचरणम् ड. शास्त्रमर्यादापालनम्

ठ. सखीचातुर्यम् ड. शास्त्रमर्यादापालनम्

**एतेषां वैशिष्ट्यानां चर्चात्र क्रमशो विधीयते-**

क. रसवैचित्र्यम्-कालिदासेन अभिज्ञानशाकुन्तले नैके रसाः समुचिततया विन्यस्ताः सन्ति। अत्र सम्भोगश्रृङ्गारोऽङ्गित्वेन भासमानो दृश्यते। विप्रलम्भश्रृङ्गार-वीर-अद्भुत-करुण-हास्य-भयानक-रौद्र-वत्सलरसा अङ्गतया दृश्यन्ते। एते विप्रलम्भश्रृङ्गार-वीरादयो रसा दुष्यन्तशकुन्तलामिलनात्मकस्य सम्भोगश्रृङ्गारस्य कृते सहायकभूताः सन्ति।

अत्र कस्य रसस्य कस्मिन्नङ्के कीदृशं वैचित्र्यमिति क्रमशः प्रस्तूयते-

प्रथमाङ्के चापहस्तं राजानं दृष्ट्वा व्याकुलीभूतस्य मृगस्य अवस्थावर्णने भयानकरसो यथा दृश्यते-

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**
**पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।**
**शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति।।** (कालिदासः, 1993, 1।7)

अत्रैव तथाविधस्य दुष्यन्तस्य वर्णने तु वीररसस्य स्थितिरपि दृग्गोचरीभवति।

अङ्कान्ते च ( निःश्वस्य ) गताः सर्वा श्च भवतु, अहमपि गच्छामि, शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरं प्रति।....... ( कालिदासः, 1993, पृ.80) इत्यादि व्याहरतो राज्ञोद्रवस्थया विप्रलम्भोद्रनुभूयते।

**द्वितीयाङ्के हास्यरसो विशेषतया दृश्यते-**

राजा-(विलोक्य सस्मितम्) कुतोऽयं गात्रोपघातः ?

विदूषकः-कथं कुत इति, स्वयमेव अक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि ? (कालिदासः, 1993, पृ.90)

अत्र दुष्यन्तविदूषकसम्वादे हास्यरसः स्पष्टतया दृश्यते।

तृतीयाङ्कस्यारम्भे विप्रलम्भश्रृङ्गारोऽस्ति चेत् चक्रवाकवधुश्च आमन्त्रयस्व सहचरम्, ननु उपस्थिता रजनी। ( कालिदासः, 1993, पृ.220) इत्यादिषु सम्भोगश्रृङ्गारः प्रतीतिपथङ्गच्छति। अङ्कान्ते तपस्विषु भयम्, दुष्यन्ते उत्साहश्च दृश्यते।

चतुर्थाङ्के विशेषतया करुणरसस्य प्रधानतास्ति। शकुन्तलायाः पतिगृहगमनसमये महर्षिः कण्व इत्थं विलपति-

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया**
**कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।**
**वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः**
**पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः।।** (कालिदासः, 1993, 4।8)

पञ्चमाङ्के व्यापितया हास्यरसस्य स्थितिरस्ति चेत् खेदनिर्वेदादयो भावा धर्मवीराद्भुतरसौ च समागताः सन्ति।

षष्ठाङ्के विप्रलम्भश्रृङ्गारस्य स्थितिः प्राचुर्येण दृश्यते। विदूषकेण पृष्टे सति विप्रलम्भश्रृङ्गाराकुलितो राजा दुष्यन्तः कथयति-

**इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।**
**पुनर्दृष्टिं वाष्पप्रकरकलुषामर्पितवती मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम्।।**

(कालिदासः, 1993,6।9)

एवमन्यस्मिन् स्थलेऽपि स कथयति-

वयस्य कः पतिव्रतां तामन्यः परामर्ष्टुमुत्सहते.......। (कालिदासः, 1993, पृ.429)

तथा च मातलिविदूषकयोः प्रसङ्गे राज्ञः क्रोधः प्रकटीभवति। अङ्कान्ते तु राक्षसैः सह युद्धाय प्रवृत्ते राज्ञि उत्साहो दृश्यते।

सप्तमाङ्कस्य प्रारम्भे मातले राजविषयका रतिरस्ति। ततः क्रमश आकाशात् पृथ्वीं प्रत्यागच्छतो रथस्य वर्णने अद्भुतरसः, मारीचर्षेः वर्णने विस्मयरत्योः साङ्कर्यञ्च गोचरीभवति। एवञ्च-

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।**
**ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी।।**

(कालिदासः , 1993, 7।12)

ISSN 2582-2616

इत्यादौ चाद्भुतरसस्यास्वादो भवति तथैव पुत्रदर्शनेन दुष्यन्ते वातसल्यरसस्थितिर्दृश्यते। अङ्कान्ते च दुष्यन्तशकुन्तलयोः स्थायिमिलनेन नाटकस्याङ्गी रसः सम्भोगश्रृङ्गारः स्थिरतां प्राप्नोति।

इत्थं भयानकश्रृङ्गारवीरादिरसानां यथोचितविन्यासेन नाटकमिदं गौरवं भजते।

ख. ध्वनिवैचित्र्यम्–आनन्दवर्धनस्य काव्यस्यात्मा ध्वनिः (आनन्दवर्धनः, 2003 ई.,पृ.1) इति कथनम् अभिज्ञानशाकुन्तलस्य सेवने सति सत्यं प्रतीयते। अत्र रसध्वनिस्तु अस्त्येव अन्येऽपि ध्वनिभेदा अहमहमिकया समागताः सन्ति। तेषामन्येषां ध्वनिभेदानां कानिचिद् उदाहरणानि प्रसङ्गेऽस्मिन् प्रस्तूयन्ते, यस्य माध्यमेन नाटकमिदं ध्वनिपक्षेऽपि सबलमिति तथ्यं स्थिरीभवति।

अर्थान्तरसङ्क्रमितध्वनिः यथा–

**असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।।** (कालिदासः , 1993, 1 । 23)

अत्र मे इत्यस्मिन् पदेऽर्थान्तरसंक्रमितत्वं दृश्यते। यतो हि सामान्यस्य मम न अपितु पुरुवंशसमुद्भवस्य मम इत्यर्थो ध्वन्यते।

वस्तुना वस्तुध्वनेः यथा–

**अनाघ्रातं पुष्पं किसलयमलूनं कररुहैरनामुक्तं रत्नं मधु नवमनास्वादितरसम्।**
**अखण्डं पुण्यानां फलमिव च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति भुवि।।**

(कालिदासः , 1993, 2 ।12 )

श्लोकेऽस्मिन् शकुन्तलाया अक्षतयौवनवर्णनरूपेण वस्तुना नायकस्य निरतिशया तत्सम्भोगाकाङ्क्षा उद्बुद्धा इति वस्तु व्यज्यते ।

वस्तुना वस्तुध्वनिः यथा–

**अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्।**
**द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा।।** (कालिदासः, 1993, 3 ।9)

अत्र अभिनवेत्यादिना वस्तुना पदपङ्क्तेरविकलत्वं तदानीमेव लतामण्डपप्रवेशश्चेति वस्तु द्योत्यते।

वस्तुना अलङ्कारध्वनिः यथा–

**स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं प्रियायाः सबाधं तदपि कमनीयं वपुरिदम्।**
**समस्तापः कामं मनसिजनिदाघप्रसरयो र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु।।**

(कालिदासः, 1993, 3 ।10)

स्तनन्यस्तोशीरमित्यनेन स्तनयोः सन्तापातिशयप्रतीत्या ततोऽपि तापस्य कामप्रकृतित्वेनानुमीयमानत्वाद् अनुमानालङ्कारो ध्वन्यते।

वस्तुना वस्तुध्वनिः यथा–

**उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरी।**
**अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः।।** (कालिदासः, 1993,4 ।14 ऋ)

अत्र मृगीमयूरीलतारूपाणां स्त्रीणामेव वर्णनेन पुरुषापेक्षया स्त्रीषु शोकातिशयो गम्यते।

वस्तुना अलङ्कारध्वनिः यथा–

**भूत्वा चिराय सदिगन्तमहीसपत्नी दौष्यन्तिमप्रतिरथं तनयं प्रसूय।**
**तत्सन्निवेशितधुरेण सहैव भर्त्रा शान्त्यै करिष्यति पदं पुनराश्रमेऽस्मिन्।।**

(कालिदासः, 1993,4 । 22)

अत्र सपत्नी इति पदबलाद् मत्र्यामपि पत्नीत्वारोपो व्यज्यत इति वस्तुना रूपकालङ्कारो व्यज्यते।

एवमन्यान्यपि ध्वन्यात्मकानि वर्णनानि नाटकेऽस्मिन् सम्प्राप्यन्ते।

ग. सूक्तिमाधुर्यम्–हृदयावर्जकानि विशेषकथनानि सूक्तयः सन्ति। प्रायः सर्वेऽपि जनाः स्ववचनानि सूक्तिमयानि भवन्तु इति कामयन्ते। परन्तु सूक्तिस्तु स्वतःसिद्धा मानवीया प्रवृत्तिरस्ति। सूक्तिप्रियस्य कालिदासस्य काव्ये नाटके च सर्वत्र सूक्तयो दृश्यन्ते। यथा मेघदूते **याच्ञा**

**मोघा वरमधिकगुणे नाधमे लब्धकामा** इत्यादयः सूक्तयः समागताः सन्ति तथैवाभिज्ञानशाकुन्तलेऽपि बह्वयः सूक्तयः प्राप्यन्ते। अत्र तु काश्चिदेव प्रस्तूयन्ते-

पद्यस्थाः सूक्तयो यथा-

1. अचेतनं नाम गुणं न वीक्षते।
2. अत्यारुढिर्भवति महतामप्यपभ्रंशनिष्ठा।
3. अर्थो हि कन्या परकीय एव।
4. आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः।।
5. इष्टप्रवासजनितान्यबलाजनेन दुःखानि नूनमतिमात्रदुरुद्वहानि।
6. कष्टं खल्वनपत्यता।
7. किमिव हि मधुराणां मण्डनं नाकृतीनाम्।
8. छाया न मूर्च्छति मलोपहते प्रसादे शुद्धे तु दर्पणतले सुलभावकाशा।
9. न प्रभातरलं ज्योतिरुदेति वसुधातलात्।
10. न रत्नमन्विष्यति मृग्यते हि तत्।
11. भाग्याधीनमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते।
12. मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
13. सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ।

गद्यस्थाः सूक्तयः-

1. अनतिक्रमणीयानि श्रेयांसि।
2. अनार्यः खलु परदारपृच्छाव्यापारः।
3. अरण्ये खलु मया रुदितम्।
4. अहो श्च चेष्टानुरूपिणी कामिजनचित्तवृत्तिः।
5. अहो विघ्नवत्यः प्रार्थितानां सिद्धयः।
6. आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्।
7. आश्रमवासिनो जनस्य राज्ञा आर्तिहरेण भाव्यम्।
8. उत्सवप्रियाः खलु राजानो भवन्ति।
9. कस्तावदुष्णोदकेन नवमालिकां सिञ्चति।
10. किमीश्वराणां परोक्षम्।
11. को नाम सन्तापनिर्वाणहेतुकां शारदीं ज्योत्स्नाम् आतपत्रेण निवारयति।
12. दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता।
13. दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः।
14. बहुवल्लभाः खलु राजानः।
15. विकारं परमार्थतः अज्ञात्वा अनारम्भः किल प्रतिकारस्य।
16. विनीतवेशेन प्रवेष्टव्यानि तपोवनानि।
17. सर्वः खलु कान्तमात्मानं पश्यति।
18. सागरमुज्झित्वा कस्मिन् महानद्या प्रवेष्टव्यम्।
19. स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति।

इत्यादयः।

घ. सुभाषितश्लोकाः–अभिज्ञानशाकुन्तले सुभाषितश्लोकस्थितिरपि समीचीना दृश्यते। कविः कालिदासोऽत्र कुत्रचित् सूक्तिप्रयोगेण नाटकसौन्दर्यं वर्धयति, कुत्रचित्तु सुभाषितश्लोकैः तथाविधं कार्यं करोति। अत्र क्रमशः अङ्कस्थिताः सुभाषितश्लोकाः प्रस्तूयन्ते, यैः नाटकमिदं सुभाषितश्लोकपक्षेऽपि कियद् वैशिट्यं बिभर्तीति स्पष्टीभवति–

प्रथमाङ्के–20 श्लोकः।

द्वितीयाङ्के–5, 7 श्लोकौ।

तृतीयाङ्के–न दृश्यते।

चतुर्थाङ्के–4,10 श्लोकौ।

पञ्चमाङ्के –अङ्कावतारस्य 1, ततः 5,9,13,18,23,27 श्लोकाः।

षष्ठाङ्के–36 श्लोकः।

सप्तमाङ्के–4,17 श्लोकौ।

उपर्युक्तेषु केचिद् एवंरूपाः सन्ति–

शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः।

स्पर्शानुकूला अपि सूर्यकान्तास्ते ह्यन्यतेजोऽभिभवाद् दहन्ति।। (कालिदासः, 1993, 2।7)

भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति।

शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः।। (कालिदासः, 1993, 5।4)

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।

अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम्।। (कालिदासः, 1993, 5।13)

**अतः परीक्ष्य कर्तव्यं विशेषात् सङ्गतं रहः।**

**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्।।** (कालिदासः, 1993, 5। 27)

ङ. पात्राणां वाक्पटुता–अभिज्ञानशाकुन्तले स्थले स्थले पात्राणां वाक्पटुत्वमपि दृश्यते, येन नाटकस्य स्वादुता च वर्द्धमानास्ति। यथा प्रथमाङ्के आश्रमस्थवृक्षसेचनकर्मणि प्रवृत्तानां शकुन्तलादीनां वार्तालापसन्दर्भे शकुन्तलायाः कथनस्य प्रत्युत्तरे प्रियम्वदा कथयति–(सहासम्) अत्र तावत् पयोधरविस्तारहेतुकम् आत्मनो यौवनारम्भम् उपालभस्व, मां किमुपालभसे? (कालिदासः, 1993, पृ.35)

एवञ्च प्रथमाङ्क एव दुष्यन्तः शकुन्तलां प्रति कथयति–अयि तपो वर्द्धते? (कालिदासः, 1993, पृ.51)

तथा च दुष्यन्तेन सह सम्वादावसरे अनसूया कथयति–आर्यस्य मधुरालापजनितो विश्रम्भो मामालापयति। कतरो राजर्षिवंशः अलङ्क्रियते आर्येण? कतमो वा देशो विरहपर्युत्सुकः क्रियते? किं निमित्तं वा आर्येण सुकुमारेण तपोवनगमनपरिश्रमे आत्मा उपनीतः।

(कालिदासः, 1993, पृ.54)

तृतीयाङ्कस्य दुष्यन्तप्रियम्बदानसूयासंवादावसरे अनसूया कथयति–बहुवल्लभाः खलु राजानः श्रूयन्ते। तद् यथा इयं नः प्रियसखी बन्धुजनशोचनीया न भवति, तथा करिष्यति। ( कालिदासः, 1993, पृ.188)

एवमन्येषु स्थलेष्वपि पात्राणामेतादृशीं वाक्पटुतां द्रष्टुं शक्यते।

च. प्रकृतिचित्रणम्–प्रायः कवयः काव्यरचनाप्रसङ्गे प्रकृतेरत्यधिकोपयोगं कुर्वन्ति। प्रकृतिं विना तु तेषां रचनापि अपूर्णेति मन्ये। महाकविः कालिदासोऽपि प्रकृतिप्रियः कविः वर्तते। अयं प्रकृतिरियं मनुष्यजीवनाद् अभिन्ना, इति स्वीकरोति। तथैवाभिज्ञानशाकुन्तले स्थले स्थले तादृशाः प्रसङ्गाः सन्ति, येषां बलाद् वयं वक्तुं पारयामो यद् नाटकमिदं प्रकृतिचित्रणपक्षेऽपि विशिष्टं स्थानं बिभर्तीति। अत्र तु कानिचित् प्रकृतिचित्रणानि समुपस्थाप्यन्ते–

प्रथमाङ्के शकुन्तला कथयति–सख्यौ एष वातेरितपल्लवाङ्गुलिभिः किमपि व्याहरतीव मां चूतवृक्षः। तद् यावदेनं सम्भावयामि।

(कालिदासः, 1993, पृ.37)

एवञ्च शकुन्तलां सम्बोध्य प्रियम्वदा कथयति–त्वया समीपस्थितया लतासनाथ इव अयं चूतवृक्षः प्रतिभाति।

(कालिदासः, 1993, पृ.38)

राजा दुष्यन्तोऽपि शकुन्तलायाः सौन्दर्यस्य तुलनां प्रकृत्या सह यथा करोति–

**अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।**

**कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्।।** (कालिदासः, 1993, 1।22)

अनसूया महर्षेः कण्वस्य कृते माधवीलतायाः स्थानमित्थं सूचयति–हला शकुन्तले इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता, तत् कथमिमां विस्मृतासि? (कालिदासः, 1993, पृ.42)

तथा च चतुर्थेऽङ्के प्रकृतिरपि मानवानङ्कते कियदुपकारिणीति तथ्यमित्थं प्रस्तुतमस्ति–

**क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।**

अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै–

र्दत्तान्याभणानि नः किसलयच्छायापरिस्पर्द्धिभिः।। (कालिदासः, 1993, 4।7)

एवञ्च महर्षिः कण्वः प्रकृतिमित्थं सम्बोधयति–

**भो भोः श्च सन्निहितवनदेवतास्तपोवनतरवः।**

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या**

**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।**

**आदौ वः कुसुमप्रवृत्तिसमये यस्याः भवत्युत्सवः**

**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्।।**

तपोवनं विहाय पतिगृहं प्रयान्तीं शकुन्तलामुद्दीश्य प्रियम्वदा कथयति–

**उद्गीर्णदर्भकवला मृगी परित्यक्तनर्तना मयूरी।**

**अपसृतपाण्डुपत्रा मुञ्चन्ति अश्रु इव लताः।।** (कालिदासः, 1993, 4।14)

अत्र प्रस्तुतानां मृगीमयूरीलतानामवस्थाभिः ज्ञायते यत् प्रकृतिरपि मानवद् रोदितुं जानाति।

एवमन्यान्यपि हृदयावर्जकानि प्रकृतिचित्रणानि विद्यन्तेऽत्र।

छ. शब्दालङ्कारमाधुर्यम्–शब्दगतालङ्कारः शब्दालङ्कारोऽस्ति। समुचितशब्दविन्यासेन समुचितो ध्वनिः निःसरति, येन श्रुतिसुखावहता भवति। यत्र समुचितशब्दस्य स्थितिः भवति तत्र कण्ठस्थीकरणेऽपि सौकर्यं भवति। तथैव अभिज्ञानशाकुन्तले शब्दालङ्कारमाधुर्यं सर्वत्रानुभूयते। अत्र तु शब्दालङ्कारस्य कानिचिद् उदाहरणानि प्रदर्श्यन्ते–

वृत्यनुप्रासस्य यथा–

**मुक्तेषु रश्मिषु निरायतपूर्वकायाः स्वेषामपि प्रसरतां रजसामलङ्घ्याः।**

**निष्कम्पचामरशिखाश्च्युतकर्णभङ्गा धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते।।**

(कालिदासः, 1993, 1।8 )

अत्र रकारनकारतकाराणां बहुधा आवृत्त्या वृत्त्यनुप्रासोऽस्ति।

छेकानुप्रासस्य यथा–

**कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।**

**अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु।।** (कालिदासः, 1993, 1।27)

अत्र शासति शासितरि इत्यत्रच्छेकानुप्रासः।

श्रुत्यनुप्रासस्य यथा–

**सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।**

**प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः।।** ( कालिदासः, 1993, 1।3)

अत्र दन्त्यस्थानीयानां वर्णानां बहुप्रयोगेण श्रुत्यनुप्रासोऽस्ति।

अन्त्यानुप्रासस्य यथा–

**तुरगखुरहतस्तथाहि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु।**
**पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रुमेषु।।** (कालिदासः, 1993, 1।34)

अत्र द्वितीयचतुर्थपादयोः अन्ते अनुप्रासतास्ति।

लाटानुप्रासस्य यथा–

**कृत्ययोर्भिन्नदेशत्वात् द्वैधीभवति मे मनः।**
**पुरः प्रतिहतं शैलैः स्त्रोतः स्त्रोतोवहां यथा ।।** (कालिदासः, 1993, 2।8 )
**अत्र स्त्रोतः स्त्रोत इत्यत्र लाटानुप्रासः।**
**एवमन्येद्रपि शब्दालङ्कारयुताः श्लोकाः प्राप्यन्तेद्रत्र।**

ज. अर्थालङ्कारमाधुर्यम्–अभिज्ञानशाकुन्तलेऽर्थालङ्काराणां माधुर्यं सर्वत्रानुभूयते। नाटकेऽस्मिन् उपमाकालिदासस्य इति कथनस्य चरितार्थता तु अस्त्येव सहैवान्येषामलङ्काराणां स्थितिरपि सबला दृश्यते। अत्र विशेषत उपमा–उत्प्रेक्षा–रूपक–तुल्ययोगिता–अतिशयोक्ति–निदर्शना–दृष्टान्त–प्रतिवस्तूपमा–व्यतिरेक–अर्थान्तरन्यास–अर्थापत्ति–स्वभावोक्ति–विषम–काव्यलिङ्ग–परिकर–अनुमान–समुच्चय–आक्षेप– अप्रस्तुतप्रशंसा–विभावना–समासोक्ति–विरोधाभास–सन्देह–यथासंख्य–हेतु–श्लेष–अपह्नुति–पर्यायोक्ति–प्रत्यनीक–परिणाम–विकल्प–अन्योन्य–परिसंख्या–तद्गुण–व्याजस्तुति–विशेषालङ्काराः प्रयुक्ताः सन्ति। तत्रापि उपमा–रूपक–उत्प्रेक्षा–अर्थान्तरन्यास–स्वभावोक्ति–काव्यलिङ्ग–परिकरालङ्काराः सातिशयेन दृश्यन्ते। अत्र केषाञ्चित् प्रमुखाणाम् अर्थालङ्काराणाम् उदाहरणानि प्रस्तूयन्ते–

**उपमालङ्कारस्य यथा–**

**अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्।।** (कालिदासः, 1993, 1।22)

रूपकालङ्कारस्य यथा–

**हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा।**
**प्ररोहः सम्भृतो भूयः किंस्वित् कामतरोरियम्।।** ( कालिदासः, 1993, 3।34)

उत्प्रेक्षालङ्कारस्य यथा–

**यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां यदद्धा विच्छिन्नं भवति कृतसन्धानमिव तत्।**
**प्रकृत्या यद्वक्त्रं तदपि समरेखं नयनयोर्न मे दूरे किञ्चित् क्षणमपि पार्श्वे रथजवात्।।**
(कालिदासः, 1993, 1।9)

अर्थान्तरन्यासस्य यथा–

**न खलु न खलु वाणः सन्निपात्योऽयमस्मिन् मृदुनि मृगशरीरे तूलराशाविवाग्निः।**
**क्व बत हरिणकानां जीवितं चातिलोलं क्व च निशितनिपाता वज्रसाराः शरास्ते।।**
( कालिदासः, 1993, 1।10)

स्वभावोक्तेः यथा–

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**
**पश्चार्द्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम्।**
**शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वात् वियति बहुतरं स्तोकमुर्व्यां प्रयाति।।** (कालिदासः, 1993, 1।7)

काव्यलिङ्गस्य यथा–

**जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।**
**पुत्रमेवङ्गुणोपेतं चक्रवर्तिनमाप्नुहि।।** (कालिदासः, 1993,1।12)

परिकरस्य यथा–

**धर्म्यास्तपोधनानां प्रतिहतविघ्ना क्रियाः समवलोक्य।**
**ज्ञास्यसि 'कियद्भुजो मे रक्षति मौर्वीकिणाङ्क' इति।।** (कालिदासः, 1993, 1।13)

झ. छन्दोविधानम् – प्रसङ्गानुकूलस्य छन्दसः प्रयोगेण काव्यस्य शोभा वर्द्धते। प्रसङ्गानकूलं छन्द एव प्रयोक्तव्यमिति कथयता क्षेमेन्द्रेणोक्तम्–'वृत्तरत्नावली कामादस्थाने विनिवेशिता। कथयत्यज्ञतामेव मेखलेव गले कृता।।' (क्षेमेन्द्रः,2025,3।13) अतः छन्दोविधान-चातुर्यमनिवार्यतत्त्वमस्ति। अभिज्ञानशाकुन्तले छन्दसां प्रयोगे कवेः विशेषावधानता दृश्यते। अत्र कविना अनष्टुप्–आर्या–इन्द्रवज्रा–उद्गाथा (गीति)–त्रिष्टुप्–द्रुतविलम्बित–मन्दाक्रान्ता–मालाभारिणी–मालिनी–वंशस्थ–वसन्ततिलका–वियोगिनी–शार्दूलविक्रीडित–शालिनी–शिखरिणी–स्रग्धराच्छन्दसां प्रयोगो विहितोऽस्ति। एतेषां छन्दसां प्रयोगसन्दर्भे छन्दोवैचित्र्यं दृश्यते।

ञ. आदर्शपितृत्वम्–अभिज्ञानशाकुन्तले आदर्शपितृत्वविषयेऽपि चर्चा समुपलभ्यते। आदर्शपिता स भवति यः पुत्रपुत्र्यादीनां भावनां बुद्धवा कार्यं करोति। अत्रादर्शपितुः भूमिकानिर्वाहको महर्षिः कण्वोऽस्ति। यः विश्वामित्रपुत्रीं शकुन्तलां स्वपुत्रीवत् पालयति, सर्वतो भावेन हितञ्चेच्छति। एकदा स शकुन्तलायाः प्रतिकूलदैवमनुकूलयितुं सोमतीर्थं गच्छति। तदा अतिथिसत्कारकार्ये नियुक्ता शकुन्तला दुष्यन्तं दृष्ट्वा विमोहिता सती गान्धर्वेण विधिना विवाहं करोति। दुष्यन्तोऽपि शकुन्तलां प्रति कथयति–न ते विदितधर्मा तत्र भवान् कण्वः खेदमुपयास्यति। यतः–

**गान्धर्वेण विवाहेन बव्योऽथ मुनिकन्यकाः।**
**श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः।।** (कालिदासः,1993, 3।28)

दुष्यन्तकथनानुसारं एतां घटनां बुद्धवापि महर्षिः कण्वः शान्तेन भावेन कथयति–'वत्से दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता, सुशिष्यपरिदत्तेव विद्या अशोचनीया संवृत्ता। अद्यैव त्वाम् ऋषिपरिरक्षितां कृत्वा भर्तुः सकाशं विसर्जयामि। (अपृ. 256) आदर्शपिता पतिगृहं गच्छन्तीं पुत्रीं कथं शिक्षयति ? इति विषयेऽपि अनेकानि उदाहरणानि प्राप्यन्तेऽत्र–

**ययातेरिव धर्मिष्ठा भर्तुर्बहुमता भव।**
**पुत्रं त्वमपि सम्राजं सेव पुरुमवाप्नुहि।।** (कालिदासः, 1993, 4।9)
**शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने**
**भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।**
**भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः।।** (कालिदासः, 1993, 4।20)

ट. राज्ञो दुष्यन्तस्याचरणम्–अभिज्ञानशाकुन्तले राज्ञो दुष्यन्तस्याचरणमभिनन्दनीयं दृश्यते। प्रायो राजानो निरङ्कुशा दृश्यन्ते। ते सर्वमर्यादां विस्मृत्य प्रभुशक्त्या अन्यान् जनान् उद्वेजयन्ति, कन्याका–ञ्चनादीनि अपहर्तुमपि उद्यता भवन्ति। एतस्मात् कारणात् शासकान् दृष्ट्वा जना भयमपि अनुभवन्ति। परन्तु दुष्यन्तः तथाविधो न दृश्यते। स मृगं दृष्ट्वा व्यापादयितुम् अनुधावन्नपि तपस्विवचनात् विरमति, तपस्विनं प्रणामञ्च करोति। चक्रवर्तिनः तस्यैतादृशं व्यवहारं दृष्ट्वा पुलकितः तपस्वी कथयति–

**सदृशमेवैतत् पुरुवंशप्रदीपस्य भवतः।**
**जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव।**
**पुत्रमेवङ्गुणोपेतं चक्रवर्तिनमाप्नुहि।।** (कालिदासः, 1993, 1।12)

वार्तालापावसरे तपस्वी दुष्यन्तप्रतापे प्रसन्नताञ्च प्रकटयति–

**धर्म्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य।**
**ज्ञास्यसि ' कियद्भुजो मे रक्षति मौर्वीकिणाङ्क' इति।।** (कालिदासः, 1993, 1।13)

ISSN 2582-2616

दुष्यन्त आश्रमदर्शनं पुण्यदमिति स्वीकरोति तथा चेत्थं कथयति– 'सूत नोदय अश्वान् , पुण्याश्रमदर्शनेनात्मानं पुनीमहे।' (कालिदासः, 1993, पृ.25)

एवञ्च 'सूत विनीतवेशेन प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद् गृत्र्यन्तामाभरणानि धनुश्च।' (कालिदासः, 1993, पृ.28) तथा च तपस्विकन्यका दृष्टवा 'अहो मधुरमासां दर्शनम्' इति कथयति, न तु हठात् किमपि करोति। शनैः शनैः सम्मुखीभूय तासां मध्ये शकुन्तलां विश्वामित्रमेनकासम्भवां ज्ञात्वा तस्या एवानुमत्या क्षत्रियोचितेन गान्धर्वेण विधिना विवाहं करोति। न कुत्रापि स्वप्रभुतां प्रदर्शयति। स तु तपस्विषु सम्मानं शकुन्तलायां विशुद्धानुरागं प्रकटयति।

ठ. सखीचातुर्यम्–अभिज्ञानशाकुन्तलं सखीचातुर्यस्यापि सुन्दरतममुदाहरणमस्ति। दुष्यन्तं दृष्ट्वा इयं शकुन्तला रागाकुलिता सञ्जाता इति बुद्ध्वा शकुन्तलासौन्दर्याकुलितेन दुष्यन्तेन सह तां मेलयितुं ते प्रियम्वदानसूये यादृशं चातुर्यपूर्णं कार्यमकुरुताम्, तदन्यत्र दुर्लभायते खलु। प्रथममिलनावसर एव तयोः तथाविधां चेष्टां दृष्ट्वा द्वितीयमिलनेन सम्भोगश्रृङ्गारतां सम्पादयितुं प्रियसख्योः भूमिका महत्त्वपूर्णा दृश्यते। शनैः शनैः श्रृङ्गारे निमग्नयोः तयोः कृते आश्रममर्यादापि पालनीयेति धिया ताभ्यां सखीभ्यां परोक्षतया चातुर्येण गौतम्याः समागमनस्य सूचनापि प्रदीयते–(नेपथ्ये) चक्रवाकवधु आमन्त्रयस्व सहचरम्, ननु उपस्थिता रजनी। (कालिदासः,2056,पृ.160)

ड. शास्त्रमर्यादापालनम्–नाटकमिदं शास्त्रमर्यादामपि शिक्षयति। नाटकेऽस्मिन् सर्वत्र शास्त्रमर्यादानुसारं कार्यं सञ्चालितं दृश्यते।'अतिथिदेवो भव' इत्यस्माकं मर्यादास्ति। अत्रापि तपोवनं प्रष्टिस्य अतिथिस्वरूपस्य दुष्यन्तस्य कृते तपस्विलोकः समुचितं सम्मानं करोति। एवञ्च तस्मिन् समये शास्त्रानुसारं रत्नापहारकस्य कृते दण्डव्यवस्था आसीत्। सूचकनामकस्य राजसेवकस्य 'स्फरतो मे अग्रहस्तौ इमं ग्रन्थिच्छेदकं व्यापादयितम्' (कालिदासः, 1993, पृ.391) इति कथनेन तत् स्पष्टीभवति। तथा च षष्ठाङ्कस्थस्य अमात्यपिशुनप्रतिहारिदुष्यन्त–प्रसङ्गस्य आधारेण विधवायाः सम्पत्तौ राज्याधिकारो भवति, यदि सगर्भा अस्ति चेत्तदा गर्भः सम्पत्तौ अधिकारी भवतीति शास्त्रमर्यादायाः पालनमपि अत्र दृश्यते। किमधिकम्, अत्रत्या दुष्यन्तकण्ववैखानस–गौतम्यादयः सर्वेऽपि शास्त्रमर्यादापालनतत्परा दृश्यन्ते।

निष्कर्षः–अनेनाध्ययनेन समागतैरभिज्ञानशाकुन्तलगतवैशिष्ट्यैः नाटकमिदं न केवलं रसध्वन्यलङ्कारपक्ष एव सबलं दृश्यते। इदन्तु राजधर्म–तपोवनधर्म–पितृधर्म–पुत्रीधर्म–सखीधर्मादिविषयबोधनायापि सफलमस्ति।

येषां ग्रन्थानुशीलनेन तथा पथप्रदर्शनेनाध्ययनमिदं सफलताङ्गतं तान् समस्तान् बुधजनान् वाक्यपुष्पोपहारैरभिनन्दयामि।

## सन्दर्भग्रन्थाः


1. आनन्दवर्धनः, 2003 ई., ध्वन्यालोकः, वाराणसीःचौखम्बा विद्याभवन।
2. कालिदासः, 1993ई., अभिज्ञानशाकुन्तलम् (त्रयोदशसं.), वाराणसी : चौखम्बा अमरभारती प्रकाशन।
3. कालिदासः, 2056वि.सं., अभिज्ञानशाकुन्तलम् (प्र.सं.), वाराणसी : चौखम्बा संस्कृत भवन।
4. क्षेमेन्द्रः, 2025वि.सं., सुवृत्ततिलकम् ,वाराणसी : चौखम्बा संस्कृत सीरीज आफिस।
5. विश्वनाथः, 2000ई., साहित्यदर्पणः, दिल्ली : मोतीलाल वनारसीदास।
6. गङ्गादासः, 1999ई., छन्दोमञ्जरी, वाराणसी : चौखम्बा सुरभारती प्रकाशन।
7. मम्मटः, 2004ई., काव्यप्रकाशः, वाराणसी : ज्ञानमण्डललिमिटेड ।


*रुरुसंस्कृतविद्यापीठम्, रिडी, गुल्मी।*

ISSN 2582-2616

# प्रयोजनपुरस्सरं व्यञ्जनास्वरूपम्

डॉ.नीरजशर्मा

प्रयुज्यतेऽनेनेति व्युत्पत्या प्रपूर्वकाद्-युज्धातोः करणे ल्युडिति, प्रयोजनं हेतुः, कारणमिति तदर्थः। उक्तं हि-

**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।**
**यावत् प्रयोजनं नोक्तं तावत् केन प्रगृह्यते।।**
**सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते।**
**ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।।**

एवम्प्रकारेण प्रयोजनस्यावश्यकतां प्रतिपादयन्ति विद्वज्जनाः। यतोहि-प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते, इति रीत्या व्यञ्जनास्वी-करणस्य किं प्रयोजनम्?

**शाब्दिकमतम्**

तत्र शाब्दबोधं प्रति वृत्तिप्रयोज्योपस्थितेरन्वयव्यतिरेकाभ्यां कारणत्वं सर्वैरङ्गीक्रियते। किञ्च 'एकसम्बन्धिज्ञानमपरसम्बन्धिनः स्मारकम्' इति न्यायेन हस्तिहस्तिपकयोः साहचर्यदर्शनेन कस्यचिदेकस्याभावे परस्य स्मरणं भवतीति सर्वानुभवसिद्धमस्ति। एवं रीत्या सर्वेषां शब्दश्रवणमात्रेण तत्शब्दसम्बन्धीनां पदार्थानामपि शाब्दबोधे भानापत्तिः, यथा- शब्दः समवायिकारणतया आकाशे तिष्ठति, तथा च समवायेन शब्दसम्बन्धिनः आकाशस्यापि पूर्वोक्तदिशा स्मृत्यात्मकोप-स्थितौ शाब्दबोधे भानापत्तिः। एवं येन केन प्रकारेणोपस्थितस्य पदार्थस्य च शाब्दबोधे भानापत्तिः। तदर्थं तत्प्रकारकतद्विशेष्यकशाब्द-बुद्धित्वावच्छिन्नं प्रति वृत्तिज्ञानाधीनतत्प्रकारक-तद्विशेष्यकोपस्थितिः कारणं स्वीक्रीयते। आकाशादीनां सम्बन्धान्तरेणोपस्थितिविषयत्वेऽपि वृत्तिज्ञानाधीनोपस्थितेरभावात् न तस्य शाब्दबोधे भानापत्तिः। तत्र शाब्दबोधोपयिकोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धो वृत्तिः। सा च शक्तिर्लक्षणाव्यञ्जना भेदेन त्रिधा।

छात्रानध्याप्य सायंकाले आचार्यः कथयति-'अर्कोऽस्तं गतः' इति। तत्र वाक्यनिष्ठशक्तिसम्बन्धेन सूर्यकर्तृकं भूतकालिकमस्तंगमनमिति बोधो भवति। परन्तु तद्बोधेन सहृदयानां मनसि न भवति विश्रान्तिः, अपितु अस्माभिः सर्वैरपि सन्ध्योपासनं कर्तव्यमिति अस्य द्वितीयार्थस्य बोधेनैव विश्रान्तिर्लभ्यते । स चायं द्वितीयोऽर्थ उक्तवाक्येन सम्बद्ध एव बोध्यते, असम्बद्धो वा? न तावदन्त्यः पक्षः, असम्बद्धार्थबोधनेऽतिप्रसङ्गो दुर्निवारः स्यात्। कस्याप्यर्थस्य बोधोऽस्तु नाम, को वारयेत्, असम्बद्धार्थबोधवारणाय यो हि कार्यकारणभावः स्वीकृतः, तन्निर्थकं स्यात्। नापि प्रथमः पक्षः सम्बन्धस्याद्याप्यज्ञातत्वादिति चेत्, उच्यते-यो हि सम्बन्धो भवद्भिरज्ञातः स व्यञ्जनाभिधोऽस्तीति ज्ञायताम् । शब्दतदर्थयोरयं सम्बन्धो द्योत्यद्योतकभावव्यङ्ग्यव्यञ्जकभावशब्दा-भ्यामपि सङ्कीर्तितो भवति। अयं च सम्बन्धो वाच्यवाचकभावरूप-शक्तिसम्बन्धात्, लक्ष्यलक्षणभावरूपलक्षणासम्बन्धाच्च विलक्षण एवास्ति, यतो हि- इदं पदं नैतदर्थस्य वाचकं, न वा लाक्षणिकं नापि स्मारकं, अपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेण तस्यातिरिक्तत्त्वमेव। अनया शक्यार्थसम्बद्धः, असम्बद्धो वा नानाविधोऽर्थोऽनेन सम्बन्धेन बोध्यते। व्याकरणदर्शनस्य त्वयं सम्बन्धः प्राणभूत एवास्ते। एनमन्तरा व्याकरणशास्त्रस्य सर्वस्वभूतस्य स्फोटतत्त्वस्यप्रकाशनमेव न भविष्यति। उक्तञ्च महर्षिणा व्याडिना-

**शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।**
**स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥**[1]

श्रीभर्तृहरिणाऽपि 'प्रत्येकं व्यञ्जका वर्णा भिन्ना वाक्यपदेषु ये[2]' इति।

अत्र प्रथमकारिकया प्राकृतध्वनेः शब्दस्य (स्फोटस्य) व्यञ्जकत्वम्। वैकृतध्वनेः स्फोटस्य स्थितिविशेषहेतुत्वं प्रतिपाद्यते। द्वितीयकारिकया प्रत्येकं वर्णाः पदस्फोटं वाक्यस्फोटं च व्यञ्जयन्ति। अत्र वर्णपदेन प्राकृतध्वनिरेव गृह्यते। अत एव चोक्तम्-'प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते'[3] इति। यतः प्राकृतध्वनिः स्फोटस्य व्यञ्जकः, अतस्तदीयो मात्राद्विमात्रात्रिमात्रात्मकः कालः स्फोटस्यारोपितः कालो भवति, स्फोटस्तु वस्तुतो दिग्देशकालाद्यनवच्छिन्न एव, विभुनोऽपरिमितत्वादनवच्छिन्नत्वाच्च।

पूर्वोक्तकारिकाभ्यां ध्वनेर्व्यञ्जकत्वं सुस्पष्टमायाति, अतश्च ध्वनिगता व्यञ्जनावृत्तिः स्वीकार्या। अनया व्यञ्जनया स्फोटस्य स्वरूपम-भिव्यक्तं भवति। अतः स्फोटरूपव्यङ्ग्येन येन सह ध्वनिरूपव्यञ्जकस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धः सुसम्पन्नो भवति। परन्त्वनया व्यञ्जनया पदार्थबोधो वाक्यार्थबोधो वा न भवति। अर्थस्य बोधस्तु स्फोटेनैव प्रकाशितेन भवतीति जिज्ञासायां तदपि तत्वं शाब्दिकैरभ्युपेयत एव-स्फोटोऽप्यर्थस्य व्यञ्जको भवतीति।

ISSN 2582-2616

अत्र 'उपसर्गाः क्रियायोगे'[4] इति सूत्रस्थं भाष्यं प्रमाणम्। तत्र हि क्रियायोग इत्यनेन क्रियया सहोपसर्गस्यायं व्यङ्ग्यव्यञ्जकभावसम्बन्ध एव स्वाभिप्रेतो भगवतः सूत्रकारस्य, न तु वाच्यवाचकभावः, स तु क्रियया सह धातोरेव[5]। किञ्च, 'भूवादयः' इति सूत्रस्थं भाष्यमत्रास्ति प्रमाणभूतम्। तथाहि–'क्रियाविशेषक उपसर्गः, पचतीति क्रिया गम्यते, तां प्रत्युपसर्गो विशिनष्टि' इत्युक्तं भाष्यकारेण। उद्योतकारेण चैवं व्याख्यातम्–'क्रियाविशेषक उपसर्ग इति यथाऽन्वयव्यतिरेकाभ्यां प्रत्ययोऽर्थबोधकः, तथा ताभ्यामेव क्रियागतविशेषद्योतक उपसर्गः, क्रियावाची धातुरेवेति भावः[6] इति। अत्र क्रियाविशेषक उपसर्गः, क्रियागतविशेषद्योतक इत्यर्थः। एवञ्च क्रियाविशेषस्य द्योत्यता, उपसर्गस्य च द्योतकता स्पष्टं लभ्यते। क्रियोपसर्गयोः द्योत्यद्योतकभावसम्बन्धः सुतरामनुभूयते।

किञ्च, 'भूवादयः' इति सूत्रस्य 'क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः' इत्यर्थे क्रियावाचिन इत्यंशो व्यञ्जनावृत्तिमहिम्नैव लब्धः। अन्यथा वादयो भ्वादयो धातुसंज्ञा इति प्रथमकक्षा, ततश्चादिशब्दस्य प्रकारवाचितया वाप्रकारा भ्वादयो धातुसंज्ञा इति द्वितीयकक्षा, ततः प्रकारशब्दस्य सदृशार्थकत्वेन वासदृशा भ्वादयो धातुसंज्ञा इति तृतीया कक्षा, ततश्चप्रतियोगितावच्छेदकव्यापकीभूतधर्मेण सादृश्यं गृह्यत इति नियमबलेन क्रियावाचिनो भ्वादय इत्यादि लभ्यते, प्रतियोगिता-वच्छेदकत्वव्यापकीभूतेन क्रियावाचित्वेन सादृश्यस्य ग्रहणात्। इदं च क्रियावाचित्वं न शक्त्या लब्धुं शक्यम्, वादिपदस्य तत्र शक्तेरभावात्। नाऽपि लक्षणया प्राप्तव्यः, लक्षणायाः शाब्दिकमतेऽभावात्। नाऽपि शक्यतावच्छेदकस्यारोपः कर्तुंशक्यः, मुख्यार्थस्य बाधितस्थल एव तदौचित्यात्। प्रकृते वा सदृशरूपो वादिशब्दस्य मुख्योऽर्थस्तस्य भ्वाद्यर्थेऽन्वयबाधो नास्तीति कृत्वा व्यञ्जनावृत्तिरेव शरणम् ईदृशार्थबोधने। अयमर्थो न प्रमाविषयतामधिरोहति इति तु न वाच्यम्, भगवता भाष्यकृतैवास्यार्थस्य महता संरम्भेण बोधितत्वात्। अपि चात्रैव सूत्रे शब्दतः स्फुटं व्यञ्जनायाः समर्थनं क्रियते भाष्यकारेण। तथा हि''अथवा नान्तरेण क्रियां भूतभविष्यद्वर्तमानकाला व्यज्यन्ते। अस्त्यादिभिरपि भूतभविष्यद्वर्तमानकाला व्यज्यन्ते''[7] इति। अत्र 'व्यज्यन्ते' इत्यस्य व्यञ्जनया बोध्यन्ते इत्यर्थः सुस्पष्टं प्रतीयते।

एवमेव 'आरोपितत्वं नञ्द्योत्यम्[8]', 'द्योतकाः प्रादयो येन[9]' इत्यादिकया भट्टोजिदीक्षितोक्त्या, वैयाकरणसिद्धान्तलघुमञ्जूषायामेतत्समर्थने श्रीनागोजिभट्टोक्त्या 'किञ्च'[10] व्यर्थं सद् यद्यत्सूत्रं पदं वा ज्ञापकमुच्यते, तत्सर्वं व्यञ्जकमेव शब्दप्रमाणपर्यालोचनायाम्' इति भैरवमिश्रोक्त्या[11] चैषा व्यञ्जनाख्या वृत्तिः सर्वैः स्फोटकोविदैः समादृता। लघुमञ्जूषायाः कलाटीकायां श्रीबालंभट्टैरेतस्याः समर्थने नानाविधोक्तयः प्रतिपादिताः। तथाहि–'यत्तु गतोऽस्तमर्कः' इत्यादौ न व्यञ्जना प्रतिष्ठां लब्धुं योग्या, एकसम्बन्धिज्ञानादपरसम्बन्धिस्मरणवत् स्मृतिरेव तं तमर्थं विषयी करिष्यति इति, तन्न रमणीयतामर्हति, उक्तवाक्यश्रवणोत्तरं सन्ध्यावन्दनं कर्तव्यमिति मया स्मृतम् इत्यनुव्यवसायो न भवति, तत्ताया उल्लेखोऽपि न भवति, स्मृतौ तु तत्तोल्लेख आवश्यकः। इदं पदं वाक्यं वा एतदर्थस्य न वाचकम्, न लक्षकम्, नाऽपि स्मारकम् अपि तु व्यञ्जनया बोधकमिति प्रामाणिकव्यवहारेण शक्त्यादिव्यतिरिक्ताया व्यञ्जनाया अभ्युपगमाच्च। मुख्यार्थासम्बद्धस्याप्यनया बोध दर्शनाच्च[12]' इति।

श्रीनागेशभट्टेन सिद्धान्तलघुमञ्जूषायामेतत्स्वरूपनिरूपणावसरे–'मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारण-प्रसिद्धाप्रसिद्धार्थ-विषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना इत्युक्तम्। संस्कारविशेषस्त्रिभिर्विशेषणै-र्विशेषितस्तैः। तथा च–यथा लक्षणाया मुख्यार्थबाधग्रहपूर्वकमेव बोधो भवति, तथात्र न भवति, मुख्यार्थस्य बाधग्रहो भवतु वा न भवतु, अनया तु बोधो जायत एवेति मुख्यार्थबाधग्रहनिरपेक्षबोधजनकत्वं संस्कारे प्रथमो विशेषः। लक्षणया तु मुख्यार्थसम्बद्धस्यैवाप्रसिद्धस्यैव वा बोधो भवति, अनया तु स नियमो न समादृत इति मुख्यार्थसम्बद्धा-सम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयकत्वमुक्तसंस्कारे द्वितीयो विशेषः। उक्तसंस्कारस्योद्बुद्धानुद्बुद्धत्वसाधारण्ये सर्वत्रैव सर्वेषामनया बोधः कथं न भवति, इत्यतिप्रसक्तिवारणाय वक्त्रादिवैशिष्ट्यज्ञानस्यैतज्जन्यबोधे सहकारिताऽभ्युपेयत इति वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धत्वमपि तत्र तृतीयो विशेष[13] इति।

सा च व्यञ्जनाव्यङ्ग्यव्यञ्जकभावसम्बन्धरूपैव मन्तव्या, संस्कारविशेषस्य तु तज्ज्ञापकतया तस्मिन् ज्ञापके हेतौ व्यञ्जनापदस्य व्यवहारो लक्षणयाऽप्रसिद्धशक्त्या वा। अनुभूयते च क्वचित् कार्ये क्वचिच्च कारणे एकस्यैव शब्दस्य प्रयोगः। यथाशक्यसम्बन्धरूपे कारणे लक्षणापदस्य व्यवहारो भवति न्यायशास्त्रे, शक्यताऽवच्छेदकारोपात्मके तत्फले लक्षणाशब्दस्य प्रयोगो भवति व्याकरणशास्त्रे। उच्यते च स्वयमपि 'द्योतकत्वं च क्वचित् समभिव्याहृतपदीयशक्तिव्यञ्जकत्वम्'[14] इति। एतेनोक्तस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य व्यञ्जनापदेन ग्रहणं शब्दस्थले स्पष्टं सूचितमस्ति। अपि च यथा दीपे प्रकाशकत्वशक्तावपि घटादिभिः संयोगसम्बन्धे सत्येव तस्याश्चरितार्थता वक्तुं शक्या, नान्यथा, तथैव शब्दे व्यङ्ग्यव्यञ्जकभावसत्वेऽप्यर्थेन सह तद्भिन्नस्य तादृशसंस्कारविशेषविषयत्वस्य सत्तयैव तच्चरितार्थता। उक्तञ्च– 'उपकारः स यत्राऽस्ति धर्मस्तत्रानुगम्यते[15]' इति।

नन्वर्थबोधात् प्राक् कथमस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धस्य ज्ञानम्? एतज्ज्ञानमन्तरा च कथमर्थविशेषविषयकः शाब्दबोध इति चेत्, अत्रोच्यते–वाच्यवाचकभावसम्बन्धवदस्याप्यनादितया दोषाभावात्। एतच्च पदविषयकव्यञ्जनाविषये, वाक्यगता व्यञ्जना तु स्वरूपसती एव शाब्दबोधजनिका, वाक्यनिष्ठशक्तिसम्बन्धवत्। अत एवोक्तं कलाकृद्भिः–'व्यञ्जना स्वरूपसती हेतुः[16]' इति।

इयञ्च वृत्तिः शक्तिवृत्तिवन्न शब्दमात्रनिष्ठा, अपितु तदितर निष्ठापि, तथा चोक्तम्–'सा चेयं शब्दतदर्थपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात्, 'अनया कटाक्षेणाभिलाषोऽभिव्यञ्जितः' इति सर्वजनप्रसिद्धेस्तस्यां चेष्टावृत्तित्वस्याप्यावश्यकत्वाच्च। एतेनार्थादीनां न व्यञ्जकत्वम्, किन्तु पदस्यैवेत्यपास्तम्।

**रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम्।**
**रसाकुला छादयते दक्षिणं नयनं हरेः।।**

इत्यादौ हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वे तन्निमीलनेन सूर्यास्तमयः, तेन पद्मसङ्कोचः, तेन पितामहस्थगनम्, तेनाप्रतिबद्धं रतिविलसितमिति क्रमेण व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेरर्थस्यापि व्यञ्जकत्वावश्यकत्वात्'[17]।

**आलङ्कारिकमतम्**

आलङ्कारिकैःव्यञ्जनाख्या शब्दवृत्तिः रसरूपस्यात्मनोऽभिव्यक्तयर्थं स्वप्राणभूतेवाङ्गीकृता। तत्स्वीकर्तृभिरेतस्या लक्षणं बहुषु स्थलेषूल्लिखितं वर्तते। व्यञ्जना नानाविधेन शब्देनात्मानमुल्लासयन्ती काव्ये नाट्ये च दृढं पदमादधाना सहृदयहृदयैः संवेद्यतामुपगता साधारणजनैरस्पृश्यतां नीता वर्णाश्रमानुरूपमाचारमाचरन्तीव मनांसि रमयति। को ह्येनां परिहृत्य चमत्कारसारेण रसेनाप्यायितमात्मानं बहु मन्येत।

आत्मस्वरूपाह्येषा निर्जीवमिवावस्थितं काव्यं सजीवमिव विदधति, कामिनीषु लावण्यमिव काव्यसम्बन्धिनः सर्वान् अतिशय्य वर्तत इति नातिशयितं वचः। एवं बहुभिर्मनीषिभिर्विविधरूपेण सुगृहीतापि साक्षाद् असंस्पृष्टा सतीव राजते। 'विना मातृहस्तम्, विना भ्रातृवर्गम्, विना गोरसं को रसो भोजनस्य' इति प्रतिपादितार्थः स्वांशे यथा साधीयान्, तथैव व्यञ्जनामेनां विना को रसास्वादः ? सालङ्कारा सगुणरुचिरसन्निवेश–कमनीया कामिनीव कविकृतिरनयोत्कर्षमावहति।

तत्र च काव्यप्रकाशटीकाकारेण श्रीवामनाचार्येण 'व्यञ्जना च शक्तिलक्षणाद्यजन्यप्रतीतिजनकः पदादिगतो व्यापारः, इत्युक्तम्। श्रीहरिदासभट्टाचार्येणाऽपि वाच्यादिभिन्नार्थप्रतिपादकत्वे सति वृत्तित्वमिति लक्षणमुक्तम्[18]। मूलग्रन्थत एवेदं लक्षणं लभ्यते। तथा च–

**विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः।**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥** इति

स्वकार्यसम्पादनेन शब्दस्य ज्ञानस्य क्रियायाश्च व्यापारः सकृदेव क्षीणसामर्थ्यो भवतीति कार्यान्तरार्थं पुनरन्यो व्यापारोऽपेक्ष्यत इति नियमेनाभिधादीनां निवृत्तौ सत्यां व्यञ्जनाख्यो व्यापार आश्रीयते। व्यञ्जन–ध्वनन–गमन–प्रत्यायनादिशब्दैरप्ययं व्यापारः सङ्कीर्तितो भवति[19]। अत एव ध्वनिकृतोक्तम्–'इयमेव कामप्यवचनीयामभिख्यां सम्पादयन्ती प्रतिभाजुषां कवीनां महाकवित्वावाप्तौ प्राधान्येन निमित्तम्। 'अत एव द्वित्राः पञ्चषा वा महाकवयो गण्यन्ते' इति। ध्वननं ध्वनिरिति व्युत्पत्या व्यञ्जनाव्यापारो ध्वनिशब्देन सङ्कीर्त्यते। ध्वन्यते यः, स इति व्युत्पत्त्यार्थो ध्वनिः, ध्वनतीति व्युत्पस्या शब्दो ध्वनिः, ध्वन्यते अस्मिन् इति व्युत्पत्त्या काव्यविशेषो ध्वनिरिति यथायथं ध्वनिशब्दार्थोऽस्मिन्नि–बन्धेऽप्युन्नेयः। काव्यस्यात्मा ध्वनिरिति बुधैः यः समाम्नातपूर्वः[20] इति ध्वनिकारस्य श्लोकेन ध्वनिपदार्थो ध्वनिकृत आनन्दवर्धनाचार्यात् पूर्वमपि विद्वत्सु प्रथित आसीत्। पूर्वमस्य समाम्नाते सत्येव समाम्नातपूर्वं इति विशेषणं साधूपपद्यते, नान्यथा। परमेतदवगत्यापि विशेषतो नामग्राहं ध्वनिपरम्परां नावधारयितुं शक्नोमि तादृशनिश्चायकपदस्य स्फुटमनुपलम्भात्।

यावद् आनन्दवर्धनाचार्यः ध्वनिसम्प्रदायन्नारब्धवान् तावत् काव्यजगत्यलङ्कारस्य रीतेश्च, नाट्यजगति रसस्य प्राधान्यमासीत्। अलङ्कारसम्प्रदायप्रवर्तको भामहः काव्यालङ्कार उक्तिवैचित्र्यस्य काव्यप्राणात्मतां प्रतिपादयामास। उक्तिवैचित्र्ये च वक्रोक्तिरेव प्राणान् अर्थयति इति च। तथोक्तं तेन–

**सैषा सर्वत्र वक्रोक्तिरन्यार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥** इति।

वक्रोक्तेः स्वरूपं प्रतिपादयन् स एवमाह–'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः' इति। तदुत्तरवर्ती अलङ्कारसम्प्रदायस्य मुख्यो दण्डी। अनेन काव्यदर्पणेऽतिशयोक्तेरलङ्कारमूलत्वं समर्थितम्। एवमन्ये उद्भट–रुद्रट प्रभृतयोऽप्यलङ्कारपरम्पराया अलङ्कारभूता आचार्याः संस्कृत–साहित्याकाशे समुदिताः स्वप्रखरप्रतिभयाऽलङ्कारपथं व्यरोचयन्।

रीतिसम्प्रदायप्रवर्तको वामनाचार्यः। यस्य मते रीतिरेव काव्यस्यात्मतत्त्वम्। यथाह–'विशिष्टा पदरचना रीतिः'[21], 'रीतिरात्मा तु काव्यस्य'[22] इति। अत्र सर्वत्रात्मपदं सारभूतपरं, न तु न्यायादिदर्शनवत् स्वीकार्यं, यतोहि ज्ञानाधिकरणस्य ज्ञानरूपस्य वा मुख्यस्यात्मनो बाधात्।

अनन्तरं रससम्प्रदाये प्रथितयशसो भरतमुनिः। 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः[23]' इत्याह।

अत्रेदं बोध्यम्-अलङ्कारसम्प्रदायप्रवर्तकाचार्यैः वक्रोक्तिरेव काव्यजीवनाधायकतया वर्णिता, तैः ध्वनिः न्यूनः स्वीकृतः यथा वस्तुनिबन्धनमुपेक्ष्य वैलक्षण्यानुसरणं कवेः काव्ये जीवनमादधातीति ध्वनिमार्गस्यैव सङ्केतः प्रतीयते। वाच्यलक्ष्यातिक्तस्य वैलक्षण्यस्यापि सङ्ग्रहस्तैः कृत इति किञ्चित्स्पृष्ट एव तैः ध्वनिमार्गः।

काव्यात्मां रीतिं प्रतिपादयता वामनाचार्येणापि ध्वनिमार्गः कथञ्चिदाकलित एव। वर्णनीयविषयानुरूपा सङ्घटना काव्यमुत्कर्षयति, न विपरीता इति हि तेषामभिमतम्। सङ्घटनायां वर्णनीयविषयानुरूपत्वं नामिधा-लक्षणाभ्यां समुन्नेतुं शक्यम्, तयोस्तदुन्नयने सामर्थ्याभावात्, किन्तु कयाचिदन्यया दिशेति स्फुटमेव तदनुगमनम्।

रससम्प्रदायवाद तु रसस्य व्यञ्जनां विना प्रतीतिः गगनपुष्पायितैव, अत एव तां कल्पयतीति स्पष्टं तत्सम्प्रदाये तदभ्युपगमः।

अयमाशयः-रसस्य वाच्यत्वाभ्युपगमे रसेति सामान्यशब्दस्य श्रृङ्गारादिविशेषशब्दस्य वा प्रयोगमन्तरा तस्य प्रतीतिर्न शक्यसम्भवा स्यात्। न चैवं विभावाद्यप्रतिपादने रसश्रृङ्गारादिशब्दानां भूयो भूयः प्रयोगेऽपि रसाद्यप्रतीतेः, रसादिशब्दाप्रयोगे विभावादिप्रतिपादनेच रसाद्युपलम्भाद् अन्वयव्यतिरेकाभ्यां विभावादिसत्त्वमेव रसावधारणहेतुः, तेषामेव प्रत्यायकत्वमायातीति व्यञ्जनैव वृत्तिस्तदुपयोगिनी। अभिधायास्तदुद्बोधने सामर्थ्याभावो दर्शित एव। मुख्यार्थबाधाद्यभावाल्लक्षणाया अपि नावसरः। तदुक्तम्-'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्' इति।

एतत् सर्वमाकलय्य ध्वनिकृतोक्तम्-'तृतीयस्तु रसादिलक्षणप्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते, न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद् विभिन्न एव'[24] इति।

इत्येवं पूर्वं यथाकथश्चित् स्पृष्टो ध्वनिमार्गस्तदभाववादिभि-र्विलोपितः, अन्यथा रूपं प्रतिपादितो वेति तदुन्मीलनाय बहुप्रयत्नवान् ध्वनिसम्प्रदायप्रवर्तकश्रीआनन्दवर्धनाचार्यः।

एतावत् पर्यन्तं वैयाकरणालङ्कारिकदिशा किञ्चिद् व्यञ्जनाप्रयोजनं तत्स्वरूपञ्च प्रतिपादितम्। सर्वैः तत्तच्छास्त्रविद्भिराचार्यैः स्वस्वशास्त्रवासनया तत्तत्पदार्थस्य लक्षणं निगदितम्, तथापि वैयाकरणनिकाये "अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" इति न्यायानुसारं काव्यज्ञैः यल्लक्षणमुक्तं-"व्यञ्जना च शक्तिलक्षणाद्यजन्यप्रतीतिजनकः पदादिगतो व्यापारः," एवञ्च "वाच्यादिभिन्नार्थप्रतिपादकत्वे सति वृत्तित्वमिति" उभयो लक्षणयोः शब्दतो भिन्नत्वेऽपि अर्थतः समानत्वेन, लक्षणस्य च भेदघटितत्वेन, तत्रापि भेदज्ञानं प्रति प्रतियोगिज्ञानस्य सापेक्षत्वात् लक्षणस्य शरीरं गुरुभूतम्। वैयाकरणमते च 'संस्कार विशेषो व्यञ्जना' इत्यन्तल्लघुभूतल्लक्षणं कस्मै न रोचते। एतस्य लक्षणस्य भेदाद्यघटितत्वेन लघुभूतत्वात्।

## पादटिप्पणी

1. वा. 50 1976-हरिवृषभठोकायामुद्धृतेयं कारिका।
2. वा. प. 1188।
3. म. भा. प्र. उ. 1।3।1
4. म. मा. 1-4-59
5. म. मा. 1-3-1
6. म. मा. 1-3-1
7. म. मा. 1-3-1
8. वै. भू. सा. कारि.-40
9. वै. भू. सा. कारि.-42
10. वै. सि. ल. म., रत्नप्रभा युता, पृ. 133
11. भै. परिभाषे. टी.-1 प्रक.
12. वै. सि. ल. म. क. टी., पृ. 163
13. वै. सि. ल. म., र. प्र. युता, पृ. 133
14. वै. सि. ल. म., व्य. निरू.
15. वा. प.-3।3।6
16. वै. सि. ल. म., क. टी., पृ. 161
17. वै. सि. ल. म., व्य. निरू.
18. सा. द. कुसु. टी., 2 परि., पृ. 5
19. सा. द. 2-12-13, पृ. 51-52
20. ध्वन्यालोकः- 1।1
21. काव्यालङ्कारसूत्राणि-1।2 ।7।
22. काव्यालङ्कारसूत्राणि-1।2।6।
23. नाट्यशास्त्रम्-6, पृ. 272
24. ध्वन्यालोकः- 1, पृ. 27-28।

*सहायकप्राध्यापकः, शासकीयसंस्कृतमहाविद्यालयः*

*देवेन्द्रनगरम्, पन्ना, मध्यप्रदेशः*

ISSN 2582-2616

# वेदाङ्गसाहित्ये कल्पसूत्राणां महत्त्वम् उपादेयता च

**डॉ. पवनकुमारपाण्डेयः**

वेदस्तुश्च निखिलविश्ववाङ्मयस्योपजीव्याग्रन्थोऽस्ति। यत्र मानवजीवनोपयोगिन एवञ्च समस्तमानवमात्रकल्याणपराः सिद्धान्ताः निर्दिष्टाजः सन्ति। वैदिकवाङ्मये वेदानन्तसरं वेदाङ्गसाहित्यास्य स्थानं वर्तते। वेदेषु भारतीयसंस्कृतिः बीजरूपा वर्तते यस्याः पल्लवनाय वेदाङ्गान्येव विनियुज्यन्ते। वेदानामनुशीलने तदनुष्ठाने च वेदाङ्गैः परमं साहाय्यं लभते। अङ्गशब्दस्य व्युत्पत्तिलभ्य अर्थोऽस्ति 'उपकारकः'। 'अङ्ग्यन्ते ज्ञायन्ते अमीभिरिति अङ्गानि' इति व्युत्पत्या सारल्येन वस्तुस्वरूपज्ञाने अङ्गानि उपकारकाणि भवन्ति।

निरुक्तकारेण यास्काचार्येण वेदाङ्गरचनायाः प्रयोजनमेवं प्रतिपादितम्–''साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षा–त्कृतधर्मेभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरेभ्य बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च।[1]'' मुण्डकोपनिषदि वेदसहितवेदाङ्गानामपराविद्यायां गणना संप्राप्यते। तथाहि–''द्वे विद्ये वेदितव्ये इति ह स्म यद् बह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति।[2]''

शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षड्वेदाङ्गानि सन्ति। वैदिकमन्त्राणां शुद्धोच्चारणाय शिक्षायाः यज्ञानुष्ठानस्य सम्यक् सम्पादनाय कल्पस्य शब्दज्ञानस्य रचनायै च व्याकरणस्य वैदिकगूढ–पदार्थानामर्थज्ञानाय निरुक्तस्य वैदिकमन्त्राणां यथाविधिपाठायोच्चारणाय च छन्दसस्तथा यज्ञेषु सत्कालपरिज्ञानाय ज्यौतिषशास्त्रस्य च उपादेयत्वं वर्तते।

वेदाङ्गसाहित्ये कल्पस्य द्वितीयं महत्त्वपूर्णस्थानं विद्यते। पाणिनीयशिक्षायां कल्पाङ्गं वेदपुरुषस्य हस्तस्थानीयं कल्पितम्[3]। यथा हस्तादृते न कोऽपि पुरुषः स्वक्रियासम्पादने समर्थो भवति एवमेव कल्पवेदाङ्गं विना यज्ञप्रधानस्य वेदस्य यज्ञानुष्ठानं न सम्भवति। अतो वेदाङ्गेषु कल्पः प्रमुखस्थानं भजते।

'कृप् अवकल्पने' इति धातोः कर्मणि 'घञ्'–प्रत्यये कृते सति कल्पशब्दो निष्पद्यते। यस्यार्थो भवति विधिः। यागप्रयोगाणां सम्यगज्ञापकं शास्त्रं कल्प इत्युच्यते–''कल्प्यते समर्थ्यते यागप्रयोगोऽत्र''[4] अथवा 'वेदविहितकर्मणां सम्यगुपकल्पकं शास्त्रं कल्प इति'–'कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्'[5]। भाष्यकारकाचार्यमते 'विधिवाक्यानां संग्रहः कल्पः[6]'। वेदार्थज्ञाने प्रत्येकवेदाङ्गानां विशिष्टं महत्त्वं वर्तते। तथापि यज्ञकर्मणां प्रतिपादकत्वात् कल्पवेदाङ्गमतिशयेन प्रशस्यते। शतपथब्राह्मणे यज्ञः श्रेष्ठतमकर्मत्त्वेनोक्तः– 'यज्ञो वै श्रेष्ठतमं कर्म।[7]' तस्य यज्ञस्य प्रयोगः विध्यादिविषयाणां वर्णनं कल्पशास्त्रे प्राप्यते।

वैदिक काले यज्ञ एव भारतीयानां प्रधानं धार्मिककर्म आसीत्। यद्यपि यज्ञानुष्ठानस्य वर्णनं ब्राह्मणग्रन्थेषु समुपलभ्यते। परं तत्र यज्ञक्रियानुष्ठानस्य अतिविस्तृतत्वात् जटिलत्वात् परोक्षवृत्तित्वाच्च यागनियमान् संक्षेपेण सारल्येन क्रमेण च व्यवस्थापयितुं कल्पसूत्रस्य निर्माणमभूत्। यज्ञक्रियानुष्ठानविश्लेषणे कल्पमेव सुतरां समर्थमिति सर्वैरपि मन्यते।

ब्राह्मणग्रन्थाः यागानुष्ठानस्य प्रतिपादकाः सन्ति। परन्तु कल्पसूत्राणां साहाय्यं विना ते यज्ञसम्पादने असमर्थाः। कल्पैः वेदादृतेऽपि यज्ञाः सम्भवन्ति इति कुमारिलभट्टेन कल्पसूत्राणां वैशिष्ट्यं प्रतिपादयतोक्तम्–

**वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः।**
**न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकात्।।[8]**

नारदपुराणे उक्तं यद् कल्पज्ञानमात्रेण मनुष्यः कर्मणि कुशलो भवति[9]। महर्षी पाणिनिपतञ्जली कल्पसूत्रान् प्रोक्त–साहित्यरूपेण स्वीकृतवन्तौ[10]। प्रोक्तसाहित्येन अभिप्रायो वर्तते इदमाचार्याणां मौलिककृतिः नास्ति। अर्थात् आचार्याः कल्पानां प्रवचनं कृतवन्तः न तु रचना। एतौ स्वस्मिन् ग्रन्थे कश्यप–कौशिकयोः कल्पानामुल्लेखमपि कृतवन्तौ। कल्पसूत्राणि क्वचिच्छाखाभेदेन भिन्नानि क्वचिच्च अभिन्नान्यपि समुपलभ्यन्ते। अत एकः पक्षो निश्चेतुं न शक्यते। हिरण्यकेशिसूत्रटीकाकारेण महादेवेनापि अभिहितम्–''तत्र कल्पसूत्रं प्रतिशाखं भिन्नमभिन्नमपि क्वचित् शाखाभेदे अध्ययनभेदाद् वा सूत्रभेदाद् वा। आश्वलायनीयं कात्यायनीयं च सूत्रं हि भिन्नाध्ययनयोर्द्वयोर्द्वयोः शाखयोरेकैकमेव। तैत्तिरीयके च समाम्नाये समानाध्ययने नानासूत्राणि। अनेन च सूत्रभेदे शाखाभेदः शाखाभेदे च सूत्रभेद इति परम्पराश्रय इति वाच्यम्।'' अनेनैव कल्पसूत्राणामविच्छिन्नपरम्परां द्योतयता एतेषामपौरुषेयत्ववत् नित्यत्वं साधितम्। तथाहि–

न हि सूत्राणां कर्तृसम्बन्धि–संज्ञाद्यतनी किन्तु नानाकल्पगतासु तत्तन्नामकमहर्षिव्यक्तिषु नित्याग तत्प्रणीतसूत्रेषु च नित्यां जातिमवलम्ब्य तिष्ठति यथा पुरुषनामाङ्कितशाखासु संज्ञा इति। तदिदं कल्पवेदाङ्गं सूत्रेषूपनिबद्धमस्ति।

भारतीयार्षवाङ्मये सूत्रसाहित्यस्य विशिष्टं स्थानं वर्तते। वैदिकसाहित्ये सूत्राणां काल अध्ययनचिन्तनपरम्परायाः चरमोत्कर्षं प्रदर्शयति। स्वीयया विशिष्टशैल्या प्राक्कालिके समाजे अधुनाऽपि समादृतमस्ति सूत्रसाहित्यम्। वैदिक– साहित्यस्य अर्वाचीनसाहित्येन सह सम्बन्धयोजकमिदं सूत्रसाहित्यं संस्कृतवाङ्मये श्रृंखलात्वं धारयति। कल्पवेदाङ्गस्य चत्वारो भेदाः सन्ति– श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रम्, शुल्बसूत्रञ्चेति। कल्पवेदाङ्गस्य चत्वारो भेदाः यथाक्रमेण व्यपदिश्यन्ते तत्र कालक्रमः कारणं नास्ति। वस्तुतस्तु क्रमोऽयं कल्पसूत्राणाम् उपयोगिता–महत्त्वदृष्ट्या च निर्धारितः। एतेषां श्रौतगृह्यधर्मशुल्बसूत्राणां कार्यक्षेत्रं भिन्नमस्ति। अत एतेषां समकालिकमस्तित्वमपि स्वतः सिद्धं भवति।

**श्रौतसूत्रम्–**

वेदोक्ते कर्मकाण्डे सनातन–हिन्दूसमाजस्य सुदीर्घकालात् नैष्ठिक– भावेन सुदृढो विश्वासो वर्तते। श्रौतसूत्राणि शतपथादिब्राह्मणेषु वर्णितानां कर्मकाण्डविधानानामेव निर्देशाः सन्ति। वैदिकसंहितासु वर्णिताः ये यज्ञाः ते साररूपेण श्रौतसूत्रेषु सङ्कलिताः। श्रौतसूत्राणां मुख्यं प्रयोजनं वैदिकहविर्यज्ञानां सोमयागादि–धार्मिकानुष्ठानानां प्रतिपादनमस्ति। श्रुतिप्रोक्तानां चतुर्दशयज्ञानां प्रधानतया कर्त्तव्यविधानं श्रौतसूत्रेषु वर्तते। तथा च इमे यागाः सन्ति– दर्शपौर्णमासयागः पिण्डपितृयज्ञः आग्रयणेष्टिः चातुर्मास्यः निरुढपशुबन्धयागः इति सप्तहविर्यज्ञाः अग्निष्टोम अत्यग्निष्टोम उक्थ्यः षोडशी वाजपेययागः अतिरात्रयज्ञः आप्तोर्यामेति सप्तसोमयागाः वर्णिताः सन्ति।

यतः श्रौताग्निस्थापनानन्तरमेव श्रौतयागाः सम्पद्यन्ते अतः अग्न्याधानस्य पुनराधानस्य च विधिः श्रौतसूत्रेषु वर्णितः। एषां श्रौतसूत्राणां विषयो दुरवगाहो विद्यते।

साम्प्रतं श्रौतयागानां विधानं क्वचिदेव दृश्यते। श्रौतसूत्राणामेषाम–नुशीलनेन तद्युयगस्य धार्मिकीं सामाजिकीं स्थितिं व्यवहारं वा वयं ज्ञास्यामः। उपलब्धानि श्रौतसूत्राणि–आश्वलायन– शांखायन–कात्यायन– बौधायन–आपस्तम्ब–लाट्यायन–दाह्यायण– वैतानसूत्राणीति।

**गृह्यसूत्रम्–**

साम्प्रतिके काले श्रौताग्निविरहाद् श्रौतकर्माणि न प्रचलितानि सन्ति। परं वैदिकयज्ञानुष्ठानरूपेण आद्याप्यस्ति भारतीयजनेषु गृह्यकर्मणामादरः। गृह्यसूत्रेषु गृह्यकर्माणि वर्णितानि। तेषु गर्भाधान–पुंसवन–सीमन्तोन्नयना–दिसंस्काराः औपसनहोमादयः सप्तपाकयज्ञसंस्थाः नैमित्तिकानि च गृहप्रवेशवास्तु–अन्नग्रहणादिकर्माणि शान्तिकर्माणि पुष्टिकर्माणि स्वरक्षोपयोगीनि अभिचारकर्माणि राजकर्मादीनि वर्णितानि। एतेषु मानवस्य सर्वतोभावेन अभ्युन्नतिकराणि जीवनोपकारकाणि कर्माण्युपदिष्टानि सन्ति। अत्र गृहस्थं जनमनुलक्ष्य प्रवृत्तानि गार्हस्थ्यकर्माणि विशेषतः प्रतिपादितानि।

गृह्यसूत्राणि विभिन्नवेदैः शाखाभिर्वा सम्बद्धानि। उपलब्धेषु गृह्यसूत्रेषु कृष्णयजुर्वेदसम्बद्धानि गृह्यसूत्राण्यधिकानि सन्ति। आश्वलायनशाङ्खायन–कौषीतकिगृह्यसूत्राणि ऋग्वेदीयानि। पारस्करगृह्यसूत्रं शुक्लयजुर्वेदीयम्। बौधायनापस्तम्ब–हिरण्यकेशिभारद्वाज–मानव–काठकगृह्यसूत्राणि कृष्णयजुर्वेदीयानि। गोभिल–खादिर–जैमिनीयगृह्याणि सामवेदीयानि। कौशिकगृह्यसूत्रसमर्थवेदीयम् एतानि गृह्यसूत्राणि सम्प्रत्युपलभ्यन्ते।

**धर्मसूत्रम्–**

धर्मसूत्राणां कल्पसाहित्ये विशिष्टं स्थानं सम्मानञ्च वर्तते। धर्मसूत्रेषु वर्णाश्रमधर्माचाराणां राजधर्मादीनामुपदेशो वर्तते। गृह्यसूत्राणि पाकयज्ञस्य संस्काराणाञ्च विशेषरूपेणोपनयन–विवाह–श्राद्धानां वर्णनं कुर्वन्ति। धर्मसूत्राण्यपि एषां विषयाणां वर्णनं कुर्वन्तिग परञ्च दृष्टिभेदेन। गृह्यसूत्रे अनुष्ठानामाकार प्रकारे विधाने च विशेषाग्रहो भवति धर्मसूत्रे च एतद्विपरीतमाचार–कर्त्तव्य–व्यवहाराणां महत्त्वं वर्तते। धर्मसूत्रे ब्राह्मणक्षत्रियवैश्यशूद्राणां चतुर्वर्णानां ब्रह्मचर्य–गृहस्थवान– प्रस्थसन्यासेति चतुराश्रमाणां कर्तव्याकर्त्तव्य व्यवहारेण सह राजधर्मस्य वर्णनं राज्ञः कर्तव्यम् प्रजया सह सम्बन्धः व्यवहारनियमः अवस्थाविशेषे प्रायश्चित्तस्य विधानं सर्वमुपनिबद्धम्। विवाहसंस्कार उभयत्र वर्णितः। गृह्यसूत्रेषु तस्य पद्धतेः अनुष्ठानस्य निर्देशो वर्तते। परञ्च धर्मसूत्रेषु विवाहोत्पन्नपुत्राणां मध्ये सम्पद्विभाजनस्य प्रश्नः दायभागस्य विचारः स्त्रीणां पारतन्त्र्यम् व्यभिचाराय नियोगस्य नियमः गृहस्थस्य नित्य–नैमित्तिक–कर्मणां वर्णनं सर्वेषु धर्मसूत्रेषु अल्पाधिकमात्रायां वा समुपलभ्यते।

यद्यपि साम्प्रतं धर्मसूत्रप्रतिपादितधर्मेषु सर्वे धर्माः मनुष्यैः न प्रयुज्यन्ते परं जनाः धर्मसूत्रेषु स्वीकीयां बलवतीमास्थां निदधति। पुरातनाः बहवो धर्माः येषां प्रचारो भारतीय–जनेषु अधुनाऽपि दृश्यते। यथा प्राचीनकाले भारतीयजनाः तेषां नियमानां धर्माणाञ्च पालनं कृतवन्तः तथैव

अद्यत्वेऽपि केचन जनाः व्यवहरन्ति। सम्प्रति समुपलब्धानि धर्मसूत्राणि गौतम–बौधायन–आपस्तम्ब–हिरण्यकेशि– वशिष्ठ–वैखानस–विष्णुधर्मसूत्राणि सन्ति। एतेषूपलब्धधर्मसूत्रेषु गौतमधर्मसूत्रं सर्वप्राचीनं मन्यते। अस्य सम्बन्धः सामवेदेन सह विद्यते।

**शुल्बसूत्रम्-**

कल्पवेदाङ्गस्यान्यतममङ्गमस्ति शुल्बसूत्रम्। शुल्बशब्दस्यार्थो भवति 'रज्जुः'। अतः 'रज्वा मापितवेद्या रचना' शुल्बसूत्रस्य प्रतिपाद्यविषयोऽस्ति। वैदिककर्मकाण्डमेव शुल्बसूत्रस्य मुख्यो विषयः। कर्मकाण्डस्य प्रधानतया द्वौ भेदौ स्तः–शुल्बसूत्रं श्रौतसूत्रञ्च। तत्र श्रौतसूत्रेषु श्रुतिप्रतिपादितानां विविधयज्ञानां विशदविवरणं वर्तते। शुल्बसूत्रमेषां श्रौतसूत्राणां एको महत्त्वपूर्ण अंशो विद्यते।

गार्हपत्याग्नि–आहवनीयाग्नि– दक्षिणाग्नीनां स्थापनार्थं यज्ञवेदिनां निर्माणमपेक्षितम्। तथा च यज्ञवेदिनिर्माणविधिः शुल्बसूत्रेषु समुपदिष्टम्। भारतवर्षे रेखागणितस्य प्राचीनेतिहासज्ञानाय शुल्बसूत्राणामध्ययनं नितान्तमावश्यकमस्ति। सिद्धान्तदृष्ट्या तु प्रत्येकस्य वेदस्य शुल्बसूत्रं भवति। परञ्च सम्प्रति केवलं यजुर्वेदस्य शुल्बसूत्राणि उपलभ्यन्ते। कर्मकाण्डेन सह मुख्यतः सम्बद्धत्वात् शुल्बसूत्राणि यजुर्वेदस्यैव शाखायां संप्राप्यन्ते।

शुक्लयजुर्वेदेन सम्बद्धमेकमेव शुल्बसूत्रमस्ति–कात्यायनशुल्बसूत्रम्। कृष्णयजुर्वेदेन सह षट्शुल्बसूत्राणि वर्तन्ते। तद्यथा–बौधायन–आपस्तम्ब–मानव–मैत्रायणीय–वाराह–वाधूलाख्यानि शुल्बसूत्राणि च। एतदतिरिक्तम् आपस्तम्बशुल्बसूत्रटीकायां करविन्दस्वामिना मशकशुल्बस्य हिरण्यकेशीशुल्बसूत्रस्य चोल्लेखः कृतः। परमेते शुल्बसूत्रे साम्प्रतं नोपलब्धे स्तः। एतेषु उपलब्धशुल्बसूत्रेषु बौधायनशुल्बसूत्रं सर्वप्राचीनं महत्त्वञ्च मन्यते।

एवं प्रकारेण श्रौतस्मार्तयागानुष्ठानां संस्कारणां गृह्यकर्मणां धर्मशास्त्रीयविधिविधानानां नीतिनियमानां व्यवहाराणाञ्च सङ्क्षेपतमं सारयुतं संशयरहितं ज्ञानार्थं कल्पसूत्रमुपासनीयम्। प्राचीनकालादारभ्य अधुनापर्यन्तं कल्पसूत्रस्येमे ग्रन्थाः कर्मकाण्डजुषां सामाजिकानां सात्त्विकजीवनस्य परिचायकाः सन्ति। न केवलं तत्र कर्मकाण्डविधिरेव विद्यते अपितु तेषु जीवनस्य चरमोत्कर्षाभ्युन्नतेरुपाया अपि वर्तन्ते। एते ग्रन्थाः भारतीयां वैश्विकीं दृष्टिम् अनुष्ठानपद्धतिषु अनुस्यूतं सारतत्त्वम् आगम–निगमसामञ्जस्यं च प्रकटीकुर्वन्ति। कल्पसूत्राणां न केवलं प्राचीनदृष्ट्या महत्त्वं विद्यते अपितु नवयुगनिर्माणदृष्ट्यापि संस्कृतवाङ्मये एतेषां विशिष्टं स्थानमस्ति। वैदिक वाङ्मयस्येतिहासे कल्पसूत्राणामाविर्भावो नवयुगस्य सूत्रपात इव लक्ष्यते। कल्पसूत्रेभ्यो लौकिकसंस्कृताभ्युदयस्य प्रकर्षः ज्ञायते। अतः वेदाङ्साहित्ये कल्पसूत्राणामस्ति महनीयं स्थानमिति। अतिगम्भीरस्य वेदार्थस्य सुखावबोधने कल्पसूत्राणि नितान्तमुपयोगीनि वर्तन्ते।

**पादटिप्पणी**

1. निरुक्तम्- 1.6
2. मु. उ.-1.1.4-5
3. पा. शि. 41-42
4. सायणः-ऋ. भा. भू.
5. विष्णुमित्र ऋक् प्रातिशाख्य वर्गद्ववृत्ति
6. कर्काचार्यः कात्यायनश्रौतसूत्रभाष्यम्
7. मा. श. ब्रा. 1.7.1.5
8. वेदाङ्गेतिहासः
9. ना. पु. 2/51
10. अष्टाध्यायी 4/3/105ग महाभाष्यम् 4/2/64

*सहायकाचार्यः, संस्कृतवेदाध्ययनविभागः*
*कुमारभास्करवर्मसंस्कृतपुरातनाध्ययन*
*विश्वविद्यालयः, नलबारी, असमप्रदेशः*

ISSN 2582-2616

# संस्कृतव्याकरणपरम्परायां पाणिनेरवदानम्

मोहनीलालनेपालः ( विद्यावारिधिः )

**शोधसारः**

अस्मिन्नालेखे ''संस्कृतव्याकरणपरम्परायां पाणिनेः महदवदानमस्ति इति प्रतिपादितम्। संस्कृतव्याकरणसम्प्रदायस्य उपज्ञातापि पाणिनिरस्ति। व्याकरणरस्य यावत्यः शाखाः पल्लविताः तासां सर्वासां मूलं पाणिनीय-व्याकरणमेवास्ति। पाणिनेः पूर्वम्, इन्द्रवायुभारद्वाजादय आचार्या आसन्। व्याकरणसम्प्रदाये मूलभूता ग्रन्थाः पाणिनेः अष्टाध्यायी, कात्यायनस्य वार्तिकम्, पतञ्जलेः महाभाष्यञ्चेति सन्ति। अत्रापि यथोत्तरमुनीनां प्रमाणत्वाद् भाष्यकारमतमेव मुख्यं प्रमाणम्। कालदृष्ट्या संस्कृतवैया-करणानां त्रयो विभागाः सन्ति। ऋषयोऽपि व्याकरणेन परिचिता आसन्। अस्यां परम्परायां ब्राह्मणग्रन्थप्रातिशाख्यग्रन्थशिक्षाग्रन्थनिरुक्तादीनामपि महती भूमिका दृश्यते इत्यपि अत्र विहितम्। प्राचीनवैयाकरणेषु पाणिनिना स्वव्याकरणसूत्रेषु आपिशलिः, काश्यपः, गार्ग्यः, गालः, चाक्रवर्मणः, भरद्वाजः, शाकटायनः, शालक्यः, सेनकः, स्फोटायनः इति दश पूर्विकाचार्याणां नामानि समुल्लिखितानि। पाणिनीयव्याकरण-परम्परायां विशेषतः पाणिनिः, कात्यायनः,पतञ्जलिः इति त्रय आचार्या गृह्यन्ते। पाणिनीयं व्याकरणमेव प्राचीनकालादारभ्यः अद्यपर्यन्तम-विच्छिन्नं प्रचलति। पाणिनिः अस्य सम्प्रदायस्य मुख्याचार्यरस्तीति विवेचनमत्र विहितम्।

**शब्दकुञ्जिका**-ब्राह्मणग्रन्थः, निरुक्तम्, शिक्षाग्रन्थाः, तैत्तरीयः, सूत्रम्।

**1. विषयपरिचयः**

संस्कृतभाषायां बहवः व्याकरणसम्प्रदायाः सन्ति। सम्प्रति प्राप्तेषु व्याकरणेषु मध्ये पाणिनीयं व्याकरणमेव प्राचीनकालादारभ्य अद्यपर्यन्तम् अविच्छिन्नं प्रचलति। अस्य सम्प्रदायस्य उपज्ञाता पाणिनिरस्ति। पाणिनिना स्वकीये व्याकरणे बहूनि पूर्विकाचार्याणां नामानि सूत्रेषु प्रतिपादितानि, तेषां मतान्यपि स्वकीय व्याकरणपरिपोषणार्थं स्वीकृतानि (नार्य, 1997 : 16)। सः पाणिनिः अस्य सम्प्रदायस्य मुख्याचार्यरस्ति। पाणिनिमुनिमाधारीकृत्य संस्कृतवैयाकरणानां विभागाः कर्तुं शक्यते, पाणिनेः प्राचीनवैयाकरणसम्प्रदायः, पाणिनीय व्याकरण सम्प्रदायः, पाणिन्युत्तरकालीनपाणिनीय-वैयाकरणसम्प्रदायश्चेति त्रिधा विभक्तुं शक्यन्ते व्याकरणस्य। पाणिनिः पूर्वाचार्याणामाशयं स्वीकृत्य नूतनवैयाकरणपद्धतिं प्रणीतवान्, ततो व्याकरणस्य यावत्यः शाखाः पल्लविताः तासां सर्वासां मूलं पाणिनीयव्याकरणम् एवास्ति। अतो व्याकरणशास्त्रस्य ऐतिहासिके अध्ययने पाणिनिः केन्द्रविन्दुं मत्वा संस्कृतवैयाकरणसम्प्रदायस्य विभागः क्रियते । वैदिकवाङ्मयं विशालः सागरः, यस्य गाम्भीर्यमनन्तरं स्वतः एव सिध्यति। वेदा एव समस्तज्ञानस्य आदिमूलं कथ्यन्ते। संहितापरवर्तीकाले वेदाध्ययनस्य मौखिकी परम्परा आसीत्। गोपथब्राह्मणे व्याकरणशास्त्रस्य ओकारं पृच्छामः, को धातुः ? किं प्रातिपदिकम् ? इत्यादयः (गोपथब्राह्मण पृ.124) सञ्ज्ञानामुल्लेख उपलभ्यते। प्रातिशाख्याः प्राचीनतमं वैदिकव्याकरणम् अपि कथयितुं शक्यते। शिक्षाग्रन्थेषु पाणिनीय-शिक्षैव प्रामाणिकी प्राचीनतमा चास्ति। (उनियालः,2002 : 62)। वेदानामेव अर्थगत्यर्थं वेदाङ्गानां रचना जाता । अर्थज्ञानाय यस्य वेदाङ्गस्य रचना जाता तन्निरुक्तमेव। वैदिककोशः निघण्टुः कथ्यते, तेषाञ्च शब्दानां निर्वचनमर्थनिर्धारणं निरुक्तं कथ्यते। निरुक्तस्य रचना यास्केन कृता। यास्कस्यानुसारं प्रत्येकशब्दस्य निर्वचनमवश्यमेव कर्तव्यम्। न त्वेव न निब्रूयात्। न संस्कारमादियेत् विषयवत्यो हि वृत्तयो भवन्ति यस्यार्थ विभत्तीः सन्मयेत (निरुक्तम् पञ्चाध्यायी पृ.62)। पाणिनेः पूर्वं वेदसम्बद्याः प्रातिशाख्यादिव्याकरण प्रतिपादकग्रन्था आसन्। पाणिनेः प्राक् बहवः आचार्या आसन्। ते इन्द्र-वायु-भरद्वाज-भागुरी-पौष्करसाद्याचार्याः। एते आचार्याः पाणिनेः पूर्विकाः किन्तु तेषां नामानि अष्टाध्याय्यां न उपलभ्यन्ते किन्तु दशपूर्विकाचार्याणां नामानि पाणिनिना स्वव्याकरणसूत्रेषु प्रतिपादितानि। ते आपिशलिः, काश्यपः, गार्ग्यः, गालवः, चाक्रवर्मणः, भरद्वाजः, शाकटायनः, शालक्यः, सेनकः, स्फोटायनः (नार्य, 1997 : 4) इति। पाणिनीयव्याकरणपरम्परायाः सम्प्रति प्राप्तेषु व्याकरणेषु मध्ये पाणिनीयं व्याकरणमेव प्राचीनकालात् आरभ्य अद्यपर्यन्तमविच्छिन्नं प्रचलति। अस्य सम्प्रदायस्य मुख्याचार्यः पाणिनिरस्ति। पाणिनीयव्याकरणसम्प्रदाये प्रमाणभृता मूलग्रन्था भवन्ति पाणिनेः अष्टाध्यायी, कात्यायनस्य वार्तिकम्, पतञ्जलेः महाभाष्यञ्च। ते व्याकरणमुनित्रयम् इत्यभिधीयते। यथोत्तरं मुनीनां प्रमाणत्वात् भाष्यकारमतमेव मुख्यं प्रमाणम्। पाणिनेः अष्टाध्याय्याः अस्तित्वं तावत्पर्यन्तं स्थास्यति यावत्कालं विश्वस्मिन् संस्कृतस्याध्ययनाध्यापनप्रवाहः प्रचलयिष्यति (त्रिपाठी, 1978 : पृ.27)। संस्कृत-वाङ्मये वैयाकरणनिकायेषु विविधा शास्त्रपरम्परा सन्ति। तेषु वार्तिककारः कात्यायनः प्रसिद्धतमं नाम वर्तते । मुनित्रये उत्तरोत्तरमधिकं प्रामाण्ययति इति वैयाकरणैः स्वीक्रियते। अत एव उच्यते यथोत्तरं मुनीनां प्रमाणम् (पतञ्जलिः, 2001 : पृ.336)। पाणिन्यापेक्षया कात्यायनः कात्यायनपेक्षया अधिकलक्ष्यदर्शी पतञ्जलिः इत्येतत् उत्तरोत्तरस्य प्रामाण्यस्य कारणम्। सूत्रवार्तिकेषु पतञ्जलिकृतं महाभाष्यम् अति प्रौढं व्याख्यानमस्ति। संस्कृतव्याकरणपरम्परायामद्वितीयं स्थानम् आचार्यपतञ्जलेः। भगवता पतञ्जलिना महाभाष्यस्य

रचना कृता। अस्मिन्नालेखे पाणिनीयव्याकरणानुसारेण संस्कृतव्याकरणपरम्पराया परिचयः, तस्य विभागप्रदर्शनं, विशेषतः पाणिनिसंस्कृतपरम्परायाः पाणिनिकात्यायनपतञ्जलि-प्रभृतीनां विवेचनं सङ्क्षेपेणात्र प्रस्तूयते-

अत्र च संस्कृतव्याकरणपरम्परायाः स्वरूपं कीदृशमस्ति? तस्य ज्ञानं कथं कर्तुं शक्यते? तत्रत्या पाणिनीयसंस्कृतव्याकरणपरम्पराया यथार्थस्वरूपं तथा पाणिनेरवदानं कीदृशमस्ति? इत्यादिका शोधप्रश्ना आसन्।

पाणिनीयव्याकरणानुसारेण संस्कृत-व्याकरण-परम्परायाः स्वरूपनिर्धारणपूर्वकं पाणिनेरवदानस्वरूपज्ञान-मेवास्यानुसन्धानात्मकलेखस्योद्देश्यम्।

संस्कृतव्याकरणपरम्परायाः स्वरूपज्ञानमस्यानुसन्धानात्मकलेख-स्यौचित्यम्।

अस्मिन्नालेखे संस्कृतव्याकरणपरम्पराया-परिचयपूर्वकं पाणिनेरवदानमत्र सङ्क्षेपेण प्रस्तूयते-

**2. अध्ययनविधिः**

अध्ययनमिदं मुख्यरूपेण निगमनात्मकविश्लेषणविधिमनुसृत्य कृतमस्ति। एवमेव यथावश्यकं आगमनविधिरप्यङ्गीकृतोऽस्ति। अध्ययनक्रमे सामग्रीसङ्कलानार्थं सम्बद्धविषयकग्रन्थाध्ययनम्, तत्पूर्तये पुस्तकालयस्य प्रयोगश्चात्र विहितोऽस्ति। पाणिनियुधिष्ठिरपतञ्जलिप्रभृतीनां सिद्धान्तानुसारेण ग्रन्थाध्ययनेन एव संस्कृतव्याकरणपरम्परा-यास्वरूपनिर्धारणञ्च कृत्वा निष्कर्षः स्थापितः।

**3. अध्ययनस्य क्षेत्रं सीमाङ्कनञ्च**

पाणिनिपतञ्जलिप्रभृतिभिः स्थापितेषु सिध्दान्तेषु एव संस्कृतपरम्परायास्वरूपविवेचनमस्यानुसन्धानस्य विषयक्षेत्रम्। संस्कृतव्याकरणशास्त्रेतिहासव्याकरणमहाभाष्यादिग्रन्थाध्ययनेन संस्कृतव्याकरणपरम्परायाः स्वरूपविवेचने पाणिनेरवदानज्ञानमेवास्यानु-सन्धानात्मकलेखस्य सीमाङ्कनम्।

**4 सैद्धान्तिकाधार**

पाणिनीयव्याकरणे नव्यवैयाकरणैः प्रतिपादितेषु संस्कृतपरम्परादिव्याकरणसम्बद्धग्रन्थेषु पाणिनियुधिष्ठिरपत-ञ्जलिप्रभृतीनां ग्रन्थाध्ययनेन एव सिद्धान्तविवेचनमेव सैद्धान्तिकाधारः। अस्मिन् लेखे पाणिनीयव्याकरणानुसारेण संस्कृतपरम्परयाध्ययनं कृतम्। अत एवात्र पाणिनीयव्याकरणमेव मूलभूतं सैद्धान्तिकमाधारः। तत्र च संस्कृतपरम्परादिव्याकरणसम्बद्धग्रन्था-व्याकरणमहाभाष्यादिग्रन्थाश्चा-स्यानुसन्धानस्य सैद्धान्तिकाधारत्वेन स्वीकृताः। अनुसन्धानस्वरूप-निर्माणक्रमे आधारसन्दर्भप्रदर्शनाय सम्प्रति प्रचलितायाः लेखकमिति (एपीए) पद्धतेः प्रयोगो विहितः।

**5. विश्लेषणप्रक्रिया**

अनुसन्धानक्रमे प्रथमं संस्कृतव्याकरणपरम्पराया परिचयः, तस्य विभागः प्रदर्शिता। विशेषतः पाणिनिसंस्कृतपरम्परयायाः विवेचनमत्र विवृतम्।

**6 तथ्यांकसंकलनंविधिः**

अनुसन्धानक्रमे सम्बद्धविषयकग्रन्थाध्ययनम्, तदध्ययनार्थं सामग्रीसङ्कलनार्थञ्च पुस्तकालयस्य प्रयोगश्चेत्यादिविधयोऽपि आवश्यकतानुसारेणाऽत्र प्रयुक्ताः सन्ति। सन्दर्भग्रन्थसूच्यां संस्कृत- भाषानिबद्धाः ग्रन्था यथाविधि स्थापिताः सन्ति।

**7 संस्कृतव्याकरणसम्प्रदायः**

संस्कृतभाषायाः व्याकरणेषु मुख्यं पाणिनीयव्याकरणम्। पाणिनेः अनन्तरकालवैयाकरणाः तस्य व्याकरणपद्धतिमनुकुर्वन्ति। अतः संस्कृतव्याकरणेषु पाणिनिः मेरुदण्ड इव विराजते। पाणिनिमहामुनिमा-धारीकृत्य संस्कृतवैयाकरणानां विभागाः कर्तुं शक्यन्ते, पाणिनेः प्राचीन-वैयाकरणसम्प्रदायः, पाणिनीयव्याकरणसम्प्रदायः, पाणिन्युत्तरकालीन-पाणिनीयवैयाकरणसम्प्रदायश्चेति। पाणिनिः पूर्वाचार्याणामाशयं स्वीकृत्य नूतनवैयाकरणपद्धतिं प्रणीतवान्, ततो व्याकरणस्य यावत्यः शाखाः पल्लविताः तासां सर्वासां मूलं पाणिनीयव्याकरणम् एवास्ति। अतो व्याकरणशास्त्रस्य ऐतिहासिके अध्ययने पाणिनिः केन्द्रविन्दुं मत्वा संस्कृतवैयाकरणसम्प्रदायस्य विभागः क्रियते।

वैदिकवाङ्मयं विशालः सागरः यस्य गाम्भीर्यमनन्तरं स्वतः एव सिध्यति। वेदा एव समस्तज्ञानस्य आदिमूलं कथ्यन्ते। महर्षिणा मन्वनुसारेण 'सर्वज्ञानमयो हि सः' (मनुः 2.7.4) षडङ्गा वेदाः, ये वेदाङ्गाः कथ्यन्ते। व्याकरणं षट्षु वेदाङ्गेषु अन्यतमम्। व्याकरणस्य सम्बन्धो वेदैः सह स्वतः सिध्यति। पतञ्जलिना व्याकरणाध्ययनस्य पञ्चमुख्यप्रयोजनेषु 'आगम' प्रयोजनान्तर्गते उक्तम्-प्रधानं षडङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्न फलवान् भवति (पतञ्जलिः, 2001 : 13)। एवमेव व्याकरणाध्ययनस्य त्रयोदशगौणप्रयोजनानां वर्णने चत्वारि श्रृङ्गाः (ऋग्वेदः (4.58.3), चत्वारि वाक् (ऋग्वेदः 1.164.45), उतत्व (ऋग्वेदः 10.71.4), सक्तुमिव (ऋग्वेदः (10.71.2), सुदेवोऽसि (ऋग्वेदः (8.59.12), एते मन्त्राः उद्धृताः एषाञ्च सर्वेषां व्याकरणशास्त्रपरकव्याख्याकृता (पतञ्जलिः, 2001 : 30 -37)।

ऋग्वेदस्याष्टमण्डलस्य नवषष्टितमे सूक्ते अनेकेषु मन्त्रेषु इन्द्रस्य सम्बन्धः वाक्दोहनेन सह वरुणस्य च सम्बन्धः अधिगत-ज्ञानता जनेन दर्शितः। अथर्ववेदे विश्वरूपधारणकर्तुः वाचः वर्णनमस्ति (अथर्ववेदः 1 । 111)।

सप्तविभक्तयः, कालत्रयं, वचनत्रयञ्च इत्यादयः व्याकरणशास्त्रस्य विषयाः परोक्षरूपेण अनेकेषु मन्त्रेषु प्रतिबिम्बितः। व्याकरणं पदं वि+आङ्+कृधातोःल्युट्प्रत्यये निष्पन्नं तस्य मूलार्थे प्रयोगो यजुर्वेदे उपलभ्यते-दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः (यजुर्वेदः19.77)। एवमिदं मन्तुं शक्यते यत् वैदिकमन्त्रद्रष्टार ऋषयः व्याकरणेन परिचिता आसन्।

**7.1 संहितापरवर्ती कालः**

मौखिकी परम्परैव वेदाध्ययनस्य। सर्वेषां प्रत्यक्षरं शुद्धाकाराणां रक्षार्थं पदपाठः, क्रमपाठः, घनपाठश्चेत्यादीना विभिन्नपाठानां संरचना बभूव। लौकिकभाषायां वैदिकभाषायाञ्च भेद उत्पन्न जातः। मन्त्रार्थेभ्यो ब्राह्मणग्रन्थानां रचना जाता। एवं वैदिकमन्त्राणां पदच्छेदः सन्धिविच्छेदश्च कृत्वा पदपाठ इत्यादयो लिखिता व्याख्यार्थश्च ब्राह्मणग्रन्थाः।

सहिता परवर्तिकाले समस्तेषु पदेषु विभिन्नपदानां सुतऽसोमा (ऋग्.122) पदेषु प्रकृति-प्रत्ययानां गर्भऽत्वम् (ऋग्वेदः 164) क्रियासु उपसर्गाणाम् (ऋग्वेदः .121) (आऽधाहि) धातूनां सन्धिनियमानाञ्च ज्ञानमासीत् (एक अ आ + इह) ऋग् 1।1।12)।

**7.2 ब्राह्मणग्रन्थः**

गोपथब्राह्मणे व्याकरणशास्त्रस्य सञ्ज्ञानामुल्लेखः उपलभ्यते। यथा-ओकारं पृच्छामः,को धातुः ? किं प्रातिपदिकम् ? किं लिङ्गम् ? किं वचनम् ? का विभक्तिः ? कः प्रत्ययः ? कःस्वरः ? (गोपथब्राह्मणः पृ.124)।

**7.3 प्रातिशाख्यग्रन्थाः**

प्रातिशाख्यः प्राचीनतमं वैदिकव्याकरणम् अपि कथयितुं शक्यते। तैत्तरीय-संहितायां इन्द्रद्वारा प्रकृतिप्रत्ययादीनां दृष्ट्या विभागकरणस्य सूचना प्राप्यते-सैवमस्ति वाग्वैपराच्च व्याकृतावदत् ते देवा इन्द्रमब्रुन्, इमां...। तामिन्द्रो अध्यतोऽवक्रम्य व्याकरोत् (तैत्तरीय-संहिता, 2.4.7)।

**7.4 शिक्षाग्रन्थाः**

शिक्षाग्रन्थानां प्रतिपाद्यविषयः सामान्यतः वर्णोच्चारणं ध्वनिविज्ञानं वा वर्तते। शिक्षाग्रन्थेषु पाणिनीय-शिक्षैव प्रामाणिकी प्राचीनतमा चास्ति। अन्ये ग्रन्थाः उत्तरवर्तिनः सन्ति (उनियालः,2002 : 62)।

**7.5 निरुक्तम्**

वेदानामेवार्थगत्यर्थं वेदाङ्गानां रचना जाता। अर्थज्ञानाय यस्य वेदाङ्गस्य रचना जाता तन्निरुक्तमेव। वैदिककोशः निघण्टुः कथ्यते, तेषाञ्च शब्दानां निर्वचनमर्थनिर्धारणं निरुक्तं कथ्यते। निरुक्तस्य रचना यास्केन कृता। यास्कस्यानुसारं प्रत्येकशब्दस्य निर्वचनमवश्यमेव कर्तव्यम्। न त्वेवं न निर्ब्रूयात्। न संस्कारमादियेत् विषयवत्यो हि वृत्तयो भवन्ति यस्यार्थ विभत्तीः सन्मयेत (निरुक्तम्, पञ्चाध्यायी पृ.62)।

**7.6 प्राचीनवैयाकरणसम्प्रदायाः**

पाणिनेः पूर्वं वेदसम्बद्धा प्रातिशाख्यादिव्याकरणप्रतिपादकग्रन्था आसन्। केचन सन्ति च। पाणिनेः प्राक् बहव आचार्या आसन्। ते इन्द्र-वायु-भरद्वाज-भागुरी -पौष्करसाद्याचार्याः। एते आचार्याः पाणिनेः पूर्विकाः किन्तु तेषां नामानि अष्टाध्याय्यां न उपलभ्यन्ते किन्तु दशपूर्विकाचार्याणां नामानि पाणिनिना स्वव्याकरणसूत्रेषु प्रतिपादितानि। ते 1.आपिशलिः, 2. काश्यपः, 3. गार्ग्यः। 4. गालवः 5. चाक्रवर्मणः 6. भरद्वाजः 7. शाकटायनः 8. शाकल्यः 9. सेनकः 10. स्फोटायनः (नार्य, 1997 : 4)।

**1. आपिशलिः**-आपिशलेः नाम 'वासुप्यापिशलेः' पा.सू. 6।1।92 इति अष्टाध्यायी सूत्रे उल्लिखितम्। एवं महाभाष्य-महाभाष्यप्रदीप-काशिका-न्यासादिग्रन्थेषु तस्य स्थानं दृश्यते। पतञ्जलेःकाले आपिशलव्याकरणस्य महान् प्रचार आसीत् इति भाष्यात् ज्ञातुं शक्यते।

**2 काश्यपः**-काश्यपस्य नाम 'तृषि-मृषि-कृषेः काश्यपस्य' (1।2।25), 'नोदात्तस्वरितोदयमागामागार्ग्य-काश्यपगालवानाम्' (8।4।67) इति सूत्रे दृश्येते। काश्यपशब्दः गोत्रप्रत्ययान्तो भवति, तदनुसारेण मारीचिपुत्रः काश्यप इति पण्डितानां मतम् (त्रिपाठी,कृष्णमणिः,1978 : 18)। अधुना काश्यपव्याकरणस्य किमपि सूत्रं नोपलभ्यते।

**3 गार्ग्यः**

पाणिनिना गार्ग्याचार्यस्य नाम्ना त्रीणि सूत्राणि प्रोक्तानि। तानि 'अडगार्ग्यगालवयोः' (पा.सू.7।3।99) 'अतो गार्ग्यस्य' (8।3।20), 'नोदात्तस्वरितोदयगार्ग्यकाश्यपगालवानाम्' (8।4।67) इति। गार्ग्यशब्दः गोत्रप्रत्ययान्तः, सः भरद्वाजस्य पुत्र आसीत् इति पण्डितानां मतम्। गर्गमतस्य उल्लेखः ऋक्वाजसनेयादिप्रातिशाख्येषु निरुक्ते अपि द्रष्टुं शक्यते।

**4 गालवः**

गालवाचार्यस्य अभिप्रायः पाणिनिना अष्टाध्याय्याम् उल्लिखितः। तानि सूत्राणि 'इको ह्रस्वोऽङ्यो गालवस्य' (पा.सू.7।3।61), 'आङ्गार्ग्यगालवयोः' (.7।3।99), 'तृतीयादिषु भाषितपुस्कपुंवद्गाल-वस्य' (.7।1।74), 'नोदात्तस्वरितोदयगार्ग्यकाश्यपगालवानाम्' (8।4।67) इति।

**5 चाक्रवर्मा**

चाक्रवर्मणस्य 'ईघ चाक्रवर्मणस्य' (6।1।130) इति पाणिनीयसूत्रे चाक्रवर्मानाम समुल्लिखितमस्ति।

**6 भरद्वाजः**

'ऋतो भरद्वाजस्य' (पा.सू.7।2।63), इति सूत्रे पाणिनेः भरद्वाजनामनिर्दिष्टम्। स इन्द्रस्य शिष्यः भरद्वाज आसीत् इति पण्डितानां मतम्।

**7 शाकटायनः**

'लङ् शाकटायनस्य' (3।4।111), 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' (8।6।18), 'त्रिप्रभृतिषु शाकटायनस्य' (8।4।50), इति त्रीषु सूत्रेषु शाकटायनाचार्यस्य नाम प्रतिपादितमस्ति।

पाणिनिना शकटशब्दः नडादिगणे पठितः। शकटायनस्याभिप्राये सर्वं नाम धातुजमाह इति वैयाकरणाः मन्वते। महाभाष्ये व्याकरणे 'शकटस्य च स्तोकम्' (पा.सू.3.3.1) इति शाकटायनस्य मतमुध्दृतम्।

**8. शाकल्यः**

शाकल्यस्य नाम पाणिनिना चतुर्भिः सूत्रैः अष्टाध्याय्याम् उल्लिखितः। सूत्राणि तानि –'सम्बुद्धौ शाकल्यस्येतावनार्षे' ( 1।1।16), 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (पा.सू.6।1।127), 'लोपशाकल्यस्य' ( 8 ।3।19) । 'सर्वत्रशाकल्यस्य' ( 8 ।4।51) इति।

**9. सेनकः**

सेनकनाम्नः वैयाकरणस्य उल्लेखः पाणिनिना 'गिरेश्च सेनकस्य' ( 5।4।112) इति एकस्मिन् सूत्रे कृतोऽस्ति। अष्टाध्यायीं विहाय सेनकस्य विषये किमपि ज्ञातुं न शक्यते।

**10 स्फोटायनः**

स्फोटायनस्य उल्लेखः पाणिनिना 'अवङ्स्फोटायनस्य' (6।1।2) इति सूत्रे कृतोऽस्ति। स्फोटायननामाचार्यः स्फोटप्रतिपादको वैयाकरणः। स्फोटवादो वैयाकरणानां प्रधानवादानां मध्ये प्रथमः अस्ति। एवं तर्हि स्फोटः शब्दः ध्वनिः शब्दः तद्गुणः इति भाष्यवचनात् स्फोटायनः शाब्दिकेषु प्रसिद्धस्फोटतत्त्ववादी उपज्ञातश्च इति ज्ञातुं शक्यते।

उपर्युक्तदशवैयाकरणानां नामानि पाणिनीय सूत्रेषु द्रष्टुं शक्यन्ते। तानि सूत्राणि अनुसृत्य पाणिनेः पूर्वं तेषां कालः इति निरूपयितुं शक्यते किन्तु तेषां विशेषज्ञानमसम्भवम् इति। दशाचार्याणां मध्ये आपिशलिनामवैयाकरणः पाणिनेः समकालीन इति कथ्यते। 'वासुप्यापिशलेः' पा.सू. 6।1।92)

तस्मिन् काले विविधस्थानेषु तस्य शालाः प्रचलन्ति स्म। ताः 'आपिशलिशाला' इति प्रसिद्धाः। आपिशलि–व्याकरणात् बहूनि सूत्राणि अन्यवैयाकरणाचार्याः तेषां व्याकरणे प्रमाणरूपेण उद्धियन्ते। आपिशलमधीते इति वाक्यं कात्यायनो वार्तिके उदाहरति। भाष्यकारः धेनूनां समूहः धेनुकम् इति निष्पादयितुं एकं आपिशलि सूत्रं सूचयति, तच्च सूत्रं धेनोरनञः इति ज्ञायते भाष्यव्याख्यानेभ्यः (नार्य, 1997 : 4)।

पाणिनिस्मृतैः आचार्यैः रचिता सूत्रपाठादिः तथानुषङ्गिकग्रन्था इदानीं प्रायेण नोपलभ्यन्ते।

आपिशलः सूत्रपाठः प्रणष्टः, कानिचित् सूत्राणि काशिकादिषु उद्धृतानि उपलभ्यन्ते।

पाणिनेः प्राचीनं शाकटायनव्याकरणं अद्यतनकाले नोपलभ्यते। अधुना विद्यमानं शाकटायनव्याकरणं तु अर्वाचीनम्। प्रचीनो वैयाकरणः शाकटायन एव 'ऋक्तन्त्रम्' इति संस्कृत व्याकरण शास्त्रका इतिहास इति ग्रन्थे युधिष्ठिरमीमांसकः अभिप्रैति (युधिष्ठिरमीमांसकः पृ. 99–100)।

रामायणस्य उत्तरकाण्डे 'सोऽयं नवव्याकरणार्थवेत्ता' इति उपलभ्यते। एवं श्रीतत्त्वविधिनामके वैष्णवग्रन्थे नवव्याकरणानां निर्देश एवविधः प्राप्यते। तद्यथा–

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारकं शाकटायनम्।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।** (व्याकरणशास्त्रेतिहासः पृ.12–13)।

**8. पाणिनीयव्याकरणपरम्परा**

संस्कृतभाषायां बहवो व्याकरणसम्प्रदायाः सन्ति। सम्प्रति प्राप्तेषु व्याकरणेषु मध्ये पाणिनीयं व्याकरणमेव प्राचीनकालात् आरभ्यः अद्यपर्यन्तम् अविच्छिन्नं प्रचलति। अस्य सम्प्रदायस्य उपज्ञाता पाणिनिरस्ति। पाणिनिना स्वकीये व्याकरणे बहूनि पूर्विकाचार्याणां नामानि सूत्रेषु प्रतिपादितानि तेषां मतान्यपि स्वकीय व्याकरणपरिपोषणार्थं तेन स्वीकृतानि (नार्य, 1997 : 16)। सः पाणिनिः अस्य सम्प्रदायस्य मुख्याचार्योऽस्ति।

**8.1 पाणिनिः**

संस्कृतशास्त्रजगति ज्ञानविज्ञान–परम्परायां वैयाकरणसमुदाये पाणिनेर्नाम सर्वप्रथमं समायाति। निखिलेषु व्याकरणशास्त्रेषु लक्ष्य–लक्ष्यणात्मकं साङ्गोपाङ्गं पाणिनीयव्याकरणमेव सम्प्रति वर्तते। पाणिनेर्नामानि अनेकानि वर्तन्ते–पाणिनः, पाणिनिः, आहिकः, दाक्षीपुत्रः, शालङ्की, शालातुरीय इत्यादीनि। (त्रिपाठी,कृष्णमणिः, 1978 : पृ. 25)।

ISSN 2582-2616

वंशवृत्तम्–पणनं पणः। पण व्यवहारे स्तुतौ च इत्यस्मात् 'घञर्थे कविधानम्' (सि.कौ.तत्त्वबोधिनी पृ.572) इति कप्रत्ययः, पणः अस्या अस्तीति पणी (अत इनि ठनौ 5।2।215)इति सूत्रेण इनिप्रत्ययः। पणिनोऽपत्यम् पाणिनः तस्यापत्यम् इति अण्। पाणिनस्य गोत्रापत्यं युवा पाणिनिः (त्रिपाठी, श्रीरामप्रसादः, 1997 : 4) इति व्युत्पत्तेराधारेण पाणिनेः पिता पणिन आसीत्। मातुर्नामविषये पतञ्जलिरेव सर्वप्रथमं प्रमाणम्–तद्यथा–

**'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।**

**एकदेश विकारे हि नित्यत्वं नोपपद्यते'।।** (महाभाष्यम् 1।1।20)।

अतः एव अस्य मातुर्नाम दक्षकुलसंभवात् दक्षस्य गोत्रापत्यं दाक्षी इति। मातुलः दाक्षायणः अनुज पिङ्गल इति। पाणिनेः गुरुः माहेश्वरः। महेश्वरप्रसादात् एव अ इ उ ण् प्रभृतीनि चतुर्दश सूत्राणि प्राप्य स व्याकरणं रचयामास इति वदन्ति।

संस्कृतव्याकरणपरम्परायाम् आचार्यपाणिनेः स्थानं मूर्धन्यम्। यद्यपि पाणिनेः पूर्ववर्तिनां वैयाकरणानामुल्लेखमपि यास्कविरचिते निरुक्ते प्राप्यते, (न निर्बध्दा उपसर्गा अर्थान्निराहुरिति शाकटायन निरुक्तम् (1।1।पृ.10) उच्चावचा पदार्था भवन्तीति गार्ग्यः।) तथापि पाणिनिना व्याकरणसिद्धान्तान् सूत्रशैल्यां निबध्य यस्य 'अष्टाध्यायी' ग्रन्थस्य रचना कृता, तस्य कार्यं निस्संदेहमद्वितीयं व्याकरणपरम्परायाम्। अष्टाध्याय्याः पूर्ववर्तिरचनाः व्याकरणशास्त्रस्य सन्दर्भे नामशेषाः जाताः,पश्चाद्वर्तीरचनाश्च सीमासु अबध्नात्।

**कृतिः–**

पाणिनेरध्ययनम्–पाणिनेः खलु प्राथमिक–शिक्षा–विषये प्रमाणानि न दृश्यन्ते तथापि अयं पूर्वं जडमतिरासीदिति विद्वांसः कथयन्ति। कथासरित्सागरानुसारेण पाणिनिः पूर्वकाले जडमतिरासीत्। पश्चात् तपः प्रभावेण महेश्वरकृपया विद्वान् बभूव। अस्य पाणिनेः अपरः सतीर्थ्यो वररुचिः तथा कात्यायनः अस्य नित्यमुपहासं कुरुतः स्म। मन्दमतित्वात् बहुबारं कात्यायनात् पराजयं प्राप। ततः सः प्रतिशोधभावनया भगवन्तं शंकरं प्रसादनार्थं भीषणं तपश्चकार इति श्रूयते। श्रीमद्भागवतानुसारं– 'विद्याकामस्तु गिरीशम्'। 'स्कन्दपुराणानुसारं–

**गोपर्वतमिति स्थानं शम्भो प्रख्यापितं पुरा,**

**यत्र पाणिनिना लेभे वैयाकरणिकाग्रता'।**

इत्थं शंकरं तोषयित्वा दिव्यं व्याकरणं लब्धवान्। भगवान् शंकरः पाणिनेः पुरस्तात् ताण्डवनृत्यं कृत्वा वरदानरूपेण तस्मै अ इ उ ण् प्रभृतीनि चतुर्दशसूत्राणि दत्तवान्। उक्तञ्च–

**'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चबारम्।**

**उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम्'।**

इति।

यद्यपि श्लोकेऽस्मिन् पाणिनेर्नाम न दृश्यते तथापि किंवदन्ती तु श्रूयत एव पाणिनिः तथा सनकादिमहर्षयः सममेव तपश्चक्रुः इति।

अस्य द्वौ ग्रन्थौ लभ्येते । तस्य विषये श्लोको दृश्यते–

**'नमःपाणिनये तस्मै यस्मादाविरभूदिह।**

**आदौ व्याकरणं काव्यमनुजाम्बवतीजयम्' इति।।**

अष्टाध्यायी पाणिनेः सूत्रात्मिकी व्याकरणकृतिः वर्तते। पाणिनीयशिक्षा (शिक्षासूत्राणि) अस्यापरा कृति र्वर्तते। जाम्ववतीविजयम् नाम पाणिनेः प्रसिद्धतमं महाकाव्यं वर्तते।

**व्याकरणम्**

तपसा परितुष्टः शंकरः पाणिनये चतुर्दशसूत्राणि अ इ उ ण् प्रभृतीनि ढक्कानादरूपेण प्रदत्तवान्। तानि सूत्राणि आधारीकृत्य अष्टाध्यायीनामकं ग्रन्थं रचयामास। पाणिनिः अष्टाध्याय्यां 3997 (सप्रत्यहार सूत्राणि) सूत्राणि रचना अकरोत्। पाणिनिसूत्राणि अष्टसु अध्यायेषु विभक्तानि सन्ति। कृतिविभागश्च अष्टाध्यायी, शब्दानुशासनम्, वृत्तिसूत्रम्, एतानि पातञ्जलमहाभाष्यस्य पङ्क्तौ समुपलभ्यन्ते।

इयम् अष्टाध्यायी विश्वविश्रुता विद्यते। सूत्राणां लक्षणं पुराणोपपुराणेषु विदुषां लक्षणं भिन्नं लभ्यते।

यथा– **अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**

**अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।।** (आप्टे, 1989 : 1119)।

सूत्राणि स्वल्पाक्षरैः विस्तृतमर्थं परिप्रकाशयन्ति। सूत्रस्य इदं लक्षणमाधारीकृत्य पाणिनीयव्याकरणं सूत्रशैल्या रचितम्। पदसिद्ध्यर्थं वाक्यप्रयोगार्थं च सूत्राणाम् उपयोगिता विद्यते। व्याकरणे एतानि सूत्राणि–संज्ञा–परिभाषा–अतिदेश–विधि–नियम–अधिकारादिभेदेन षड्विधानि। तानि यथा–

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।** (पतञ्जलिः, 1988 : 1)

अष्टसु अध्यायेषु विभक्तानि पाणिनिसूत्राणि सन्ति। प्रत्यध्यायं चत्वारः पादाः सन्ति। प्रत्यध्यायं प्रतिपादे च विभिन्नानि रूपप्रदर्शनयोग्यानि प्रकृतिप्रत्ययादेशनिपातादीनि विविधानि सूत्राणि समावेशितानि सन्ति। सर्वेषु सूत्रेषु संमिलितेषु सत्सु 3983 सूत्राणि गणितानि सन्ति।

ग्रन्थेऽस्मिन् व्याकरणविभागे पाणिनीय शब्दानुशासनं सर्वोपरि स्थानमारोहति। अष्टाध्याय्या खिलपाठाः, धातुपाठः, गणपाठः, उणादिसूत्राणि लिङ्गानुशासनं प्रभृतयः तथा शिक्षा च लिखिता वर्तते।

पाश्चात्य विद्वान् टी गोल्ड स्टुकरः (न्यमित्तगपभच) महोदयेन आचार्यपाणिनिः संस्कृतस्य सर्वोत्कृष्टेषु वैयाकरणेषु अन्यतमो मन्यते (न्यमित्तगपभच एबलष्लष् एबनभ।

महाभाष्यकारेण पतञ्जलिना पाणिनेः कृतित्वं सम्मानितम् ''प्राणभूतो आचार्यो दर्भपवित्रपाणिः शुचावकाशे प्राङ्मुखम् उपविश्य महता प्रयत्नेन सूत्राणि प्रीणयती स्म तत्राऽशक्यं वर्णेननाप्यनर्थकेन भवितुं किं पुनरिता सूत्रेण'' (पतञ्जलिः, 2001 : पृ. 169)

पाणिने कालः अनिर्णीत एव। अथवा पाणिनिनापि स्वकीयः समयः कुत्रापि नोल्लिखित इतिहासपरम्परायां पाणिनेः समयः विद्वद्भिर्विविधो निर्धारितः-सत्यव्रत : 2400 ईशापूर्वम्। वासुदेवशरणः 500 ईशापूर्वम्। श्रीयुधिष्ठिरो मीमांसकः 2900 विं. सं. पूर्वम्। संस्कृतव्याकरणशास्त्रस्येतिहासेति ग्रन्थे युधिष्ठिरमीमांसकेन अन्तः साक्ष्यानां बाह्यसाक्ष्यानाञ्च आधारे 2900 विक्रमपूर्वकाल एव निश्चितः। (मीमांसकः, 2003 : 190-205)। एवं व्याकरणशास्त्रे पाणिनेरवदानम् अत्यन्तं महत्त्वपूर्णम्।

पाणिनिना प्रणीताः ग्रन्था सन्ति अष्टाध्यायी, गणपाठः जाम्बवतीविजयम् चेति। जाम्बवतीविजयं इति काव्यं विहाय सर्वे ग्रन्था व्याकरणग्रन्थाः सन्ति।

**पञ्चाङ्गव्याकरणम्**

सूत्रपाठः, धातुपाठः, गणपाठः, उणादिपाठः, लिङ्गानुशासनं चेति पञ्चाङ्गानि। शब्दसाधुत्वबोधनाय व्याकरणसूत्रं प्रमाणम्। अतः पाणिनीयव्याकरणे सूत्रपाठः अष्टसु अध्यायेषु निबद्धः इत्यतो ग्रन्थोऽयम् 'अष्टाध्यायी' इति अष्टकम् इति च विख्यातोऽस्ति। स ग्रन्थः पाणिनीयम् इत्यपरनामत्वेन प्रसिद्धो वर्तते। अयं सूत्रपाठः पाणिनिप्रोक्तस्य शब्दानुशासनस्य आधारग्रन्थोऽस्ति। महेश्वरप्रसादाल्लब्धानि अ इ उ ण्, हल् इत्यादीनि चतुर्दशमाहेश्वरसूत्राण्याधारीकृत्य प्रत्याहारमाध्यमेन वैज्ञानिकसूत्ररचनाप्रकारेण ग्रन्थकर्ता पाणिनिः स्वप्रतिभाया वैशिष्ट्यं प्रकटयति (गौड, 1982 : पृ.47)। पाणिनेः अष्टाध्याय्याः अस्तित्वं तावत्पर्यन्तं स्थास्यति यावत्कालं विश्वस्मिन् संस्कृतस्याध्ययनाध्यापन-प्रवाहः प्रचलयिष्यति (त्रिपाठी, 1978 : पृ.27)। पाणिनीयव्याकरणसम्प्रदाये प्रमाणभृताः मूलग्रन्थाः सन्ति पाणिनेः अष्टाध्यायी, कात्यायनस्य वार्तिकम्, पतञ्जलेः महाभाष्यञ्च। ते व्याकरणमुनित्रयम् इत्यभिधीयते। यथोत्तरं मुनीनां प्रमाणत्वात् भाष्यकारमतमेव मुख्यं प्रमाणम्।

**8.2 कात्यायनः**

संस्कृत-वाङ्मये वैयाकरणनिकायेषु विविधा शास्त्रपरम्परा सन्ति। तेषु वार्तिककारः कात्यायनः प्रसिद्धतमं नाम वर्तते। पाणिनेरष्टाध्याय्यां -वार्तिककारा अनेके सन्ति परं महाभाष्यानुसारं एक कात्यः कात्यायनो, भारद्वाजः, सुनागः, कोष्टा, वाडवः महाभाष्यस्य टीकाषु अन्ये द्वौ विद्येते -व्याघ्रभूतिः वैयाघ्रपद्य इति। तेषु पाणिनेरनन्तरं र्वीर्तिककाररूपेण कात्यायनस्य नाम सादरं स्मर्यते। वार्तिककारकात्यायनो विशेषेण चर्चायां समागच्छति। महाभाष्येऽपि कात्यायनवार्तिकानामेव व्याख्यानं जातम्। 'महाभाष्ये पश्पशाह्निके प्रियतद्धिता दाक्षिणात्याः यथा लोके वेदे चेति प्रयोक्तव्ये यथा लौकिकवैदिकेषु इति प्रयुज्यते' इति सः पाणिनेः सूत्राणामाविर्भावात्परं व्याकरणशास्त्रस्य आवश्यकतानुसारेण परिष्करणाय यत्नम् अकरोत्। पाणिनीयसूत्रे अस्पष्टतया प्रतिपादितानां तत्वानां सक्यग्प्रतिपादनार्थं, दुरुक्तानां तत्वानां परिहारार्थम् अनुक्तानाम् उपसंख्यानार्थं च वार्तिकानि विरचितानि कात्यायनेन।

पराशरोपपुराणे वार्तिकलक्षणम् एवं प्रतिपादितम्-

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**
**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञाः मनीषिणः** (उद्धृतः,मीमांसकः, 2003 : पृ. 328) ।

अस्य अन्यनामानि कात्यः, कात्यायनः, पुनर्वसु, वररुचिः, मेघाजित् इत्यादीनि संस्कृतव्याकरणशास्त्रेतिहासविमर्शे प्रतिपादितानि (मीमांसकः, 2003 : पृ. 142)।

अस्य कात्यायनं-कतस्य युवापत्यं कात्यायनः इति नाम भाष्ये 'लटः स्मे' इति सूत्रे विद्यते। अस्य मूलपुरुषः कत इति सिद्धम् । अन्येषां मते अस्य पिता सोमदत्तः, मातुर्नाम वसुदत्ता आसीत् । अस्य देशविषये भाष्ये प्रियतद्धिता दाक्षिणात्या इति वाक्यानुसारेण अनेन ज्ञायते यत् कात्यायनो महाराष्ट्रदेशीयो दाक्षिणात्यः श्रोत्रियो ब्राह्मण आसीत्।

ISSN 2582-2616

कात्यायनस्य कालोऽस्पष्टः। अस्य समयो विविधो निर्धारितः। युधिष्ठिरमीमांसकः कात्यायनस्य कालः विक्रमादिकालात् 2900 तः 3000 पर्यन्तं निश्चीयते। अयं पाणिनेः 300 वर्षादर्वाचीनो न्यूनतमरूपेण विक्रमतः1200 पूर्वीय आस्ते। अन्ये विद्वांस एनं क्रिस्तोः पूर्वं चतुर्थशतक इत्यनुमीयते (नार्य, 1997 : पृ. 42)

कात्यायनस्य रचना वार्तिकपाठः। स पाठः स्वतन्त्ररूपेण संप्रति नोपलभ्यते। वार्तिकेन पाणिनीयव्याकरणस्योपकारो कृतो दृश्यते। अनेन पाणिनि विरचितेषु सूत्रेषु वार्तिकानि रचयित्वा तं पूर्णाङ्कम् कृतवान्, वार्तिकशब्दस्यार्थोऽपि एतत् सूचयति-सूत्राणां व्याख्यानम् वार्तिकमस्ति। कात्यायनः सूत्रकारेण अदृष्टानि कालक्रमेण प्राप्तानि नवीनपदानि साधितवान्। पतञ्जलिनाऽपि कात्यायनस्य वार्तिकान्यादाय भाष्यरचना कृता विद्यते। वार्तिकस्य संख्या 3870 अस्ति। अस्य प्रथमं वार्तिकम्- 'सिद्धे शब्दार्थसम्बन्धे' इति। अन्येषां मते 'रक्षोहागमलघ्वसंदेहा प्रयोजनम्' इति स्वीकुर्वन्ति। अस्य कात्यायनेन पाणिनीयव्याकरणाङ्ग-भूतानि वार्तिकानि, समुन्द्रगुप्तरचिते कृष्णचरिते 'स्वर्गारोहणकाव्यम्', महाभाष्ये भ्राजसंज्ञकाः श्लोकाः छन्दशास्त्रं, सामुन्द्रिकग्रन्थः च लिखिताः सन्ति।

**8.3 पतञ्जलिः**

भाष्यकारः पतञ्जलिः विशेषतः पाणिनीयव्याकरणस्य महान् उपकारकः। अनेन पतञ्जलिना योगशास्त्रे व्याकरणशास्त्रे वैद्यकशास्त्रे च ग्रन्था रचिताः। सोऽयं पतञ्जलिः पाणिनीयशब्दसागरे महाभाष्यं निर्माय संस्कृतजगतो महान्तमुपकारं कृतवान्। महाभाष्यं धीमतां चेतांसि चमत्करोति। अनेन रचितं महाभाष्यं वैदेशिका विद्वांसः प्रशंसन्ति। मुनित्रये उत्तरोत्तर अधिकं प्रामाण्ययति इति वैयाकरणैः स्वीक्रियते। अत एव उच्यते यथोत्तरं मुनीनां प्रमाणम् (पतञ्जलिः, 2001 : पृ.336)। पाणिन्यापेक्षया कात्यायनः कात्यायनपेक्षया अधिकलक्ष्यदर्शी पतञ्जलिः इत्येतत् उत्तरोत्तरस्य प्रामाण्यस्य कारणम्। सूत्रवार्तिकेषु पतञ्जलिकृतं महाभाष्यम् अति प्रौढं व्याख्यानमस्ति। संस्कृतव्याकरणपरम्परायाम-द्वितीयं स्थानम् आचार्यपतञ्जलेः। भगवता पतञ्जलिना महाभाष्यस्य रचना कृता। अस्य ग्रन्थस्य मौलिकतायाः स्थानमपि सर्वोपरि। सूत्रवार्तिकयोर्मध्ये यत्र विवादः मतभेदश्च भवति,तत्र महाभाष्यकारेण पतञ्जलिना कृतो निर्णयो प्रामाणिकं मन्यते विद्वद्भिः। अत एव आचार्येण कैयटेन प्रदीपे उक्तम् 'यथोत्तरं हि मुनित्रयस्य प्रामाण्यम्'-मीमांसकः पृ.308 )। एष विचारः नागेशभट्टेनापि उद्योतटीकायाम् एवं प्रतिपादितः उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात्। स्पष्टं चेदं 'तदर्हम्' सूत्रे भाष्ये। (पतञ्जलिः, 2001 : सप्तमो भागः 5।1।117)।

**भाष्यलक्षणम्**

**सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।**
**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।** (आप्टे, 1989 : पृ.739) इति।

पतञ्जलेः महाभाष्येनैव व्याकरणशास्त्रस्य गणना दर्शनशास्त्रे कृता, यतो हि भाष्यकारस्य प्रतिवेदनशैल्यां नेदं प्रतीयते यत् व्याकरणस्य मुख्यं कार्यं 'शब्दोऽयं कथं निर्मितः अस्य निर्णयः परं कस्यचित् शब्दस्य प्रयोगः कथं किमर्थञ्च स्यात् इदमस्ति'। एवं कथं किमर्थञ्च इत्येतयोः इयं जिज्ञासैव महाभाष्यं दर्शनश्रेण्यां स्थापयति। उदाहरणम् ''अथ गौरित्यत्र कः शब्दः ?'' अस्मिन् वाक्ये गोरित्यस्य शब्दस्य प्रक्रिया न दर्शिता परं शब्दस्य विविधस्वरूपाणां निर्धारणं क्रियते (पतञ्जलिः, 2001 : पृ.336)।

पतञ्जलिः विरचितं महाभाष्यं न केवलं व्याकरणशास्त्रे प्रतिपादानां सिद्धान्तानामेव कोशः परं महाभाष्ये अनेके विद्यावादा दर्शनवादाश्च सन्ति। महाभाष्यस्य व्याख्याकारकैय्यटः महाभाष्यं सागरं मन्यते (पतञ्जलिः, 2001 : पृ.3)।

पतञ्जलिशब्देन विविधाः पर्यायवाचिनः शब्दाः प्राप्यन्ते-गोनर्दीयः, गोणिकापुत्रः, अहिपतिः, शेषराजः, नागनाथः, फणिभूतः, शेषाहिः चूर्णिकारः, पदकार इत्यादयः। पतञ्जलिः खलु तपस्यतः कस्यचिदृषेः सूर्यायार्घ्यप्रदानसमये सर्परूपेण भूमौ पतितः तस्मात् पतञ्जलिः इति नाम प्रसिद्धं जातम्। पतत् अञ्जलिः पतञ्जलिः टिसंज्ञायां शकन्धादिषु पररूपं वाच्यमिति पररूपे पतञ्जलिः सिद्धिः। अस्य पतञ्जले : परिचयः कुत्रापि नोपलभ्यते। अत एव पतञ्जलिविषये यथायथं वक्तुं नैव पार्यते। केषाञ्चन व्याख्याकाराणामनुसारं पतञ्जलेर्नाम गोणिकापुत्रः, इत्यनुसारं अस्य मातुर्नाम गोणिका भवितुमर्हति। गोनर्दीय इत्यनुसारेण अस्य देशो गोनर्दः भवतुं शक्नोति। अयं देशः काश्मीरे वर्तते। भारतस्य गोण्डा जनपदोऽपि कैश्चित् स्वीक्रियते।

पतञ्जलेः ग्रन्थरचनाकालविषये सुष्पष्टं किमपि नोपलभ्यते तथापि इतिहासविदोऽस्य कालः विक्रमाब्दात् 2000 वर्षपूर्व इति अनुमिन्वन्ति। महेश्वरप्रसादात् पतञ्जलिः पाणिनीयसूत्रे भाष्यं चकार। अस्य महानुभावस्य बहवो शिष्याः बभूवुः। महाभाष्यस्य भाषा सरला सरसा शीघ्रं ज्ञानप्रदा च विद्यते। ग्रन्थोऽयं संस्कृत-वाङ्मयस्य सर्वोत्तमोऽद्भूत-तमश्च विद्यते। व्याकरणशास्त्रस्य अयं सर्वप्रामाणिको ग्रन्थः। प्राचीना नवीनाश्च पाणिनीयवैयाकरणमहाभाष्यं प्रति नतमस्तकाः भवन्ति। ग्रन्थेऽस्मिन् समाजसेवा, सामाजिको व्यवहारः, विद्यार्थिलक्षणम् आहारः, विहारः, राजकीया व्यवस्था, प्रमाणत्वव्यवहारः, शब्दव्यवहारादि विषयाः प्रसङ्गानुसारेण प्रतिपादिता दृश्यन्ते।

महाभाष्यशास्त्रस्य बहुवारमुपेक्षा जाता। सर्वेषां सुदिनानि कुदिनानि भवन्त्येव। बहुवारमस्य भाष्यस्य पठन-पाठनव्यवस्था समाप्ततां प्रापिता। पुनश्चन्द्राचार्यादिभिः लुप्ततां प्रापितस्य महाभाष्यस्य प्रचारः प्रसारो विहितः। सिद्धान्तकौमुदीमाश्रित्य अधुनापि एषा धारणा वैयाकरणहृदि जागर्ति यत्-

ISSN 2582-2616

**कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।**
**कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः।।** इति।

**९. निष्कर्षः**

अस्मिन्नालेखे ''संस्कृतव्याकरणपरम्परायां पाणिनेरवदानम् इति प्रतिपादितम्। पाणिनीयव्याकरणपरम्परायां विशेषतः पाणिनिः, कात्यायनः, पतञ्जलिः इति त्रय आचार्या गृह्यन्ते। पाणिनीयं व्याकरणमेव प्राचीनकालादारभ्यः अद्यपर्यन्तमविच्छिन्नं प्रचलति। पाणिनिः अस्य सम्प्रदायस्य मुख्याचार्यः भवतीति विवेचनमत्र विहितम्। प्रतिपादनक्रमे संस्कृतव्याकरणपरम्परा विपुला दृश्यते। वैदिककालादेवास्य संस्कृतव्याकरणस्योपयोगो विशेषतया कृतो दृश्यते। सत्स्वपि आचार्येषु पाणिनेः स्थानं मूर्ध्नि वर्तते। अस्य व्याकरणस्य प्रसिद्धी रचनाकालतोऽद्य यावत् समानास्ति। शिवकृपापात्रं पाणिनिं विना तु संस्कृतव्याकरणजग–देवापूर्णमिति। प्रतिपादनक्रमे कात्यायनः,पतञ्जलेः योगदानमपि संक्षेपेणविवेचनमत्र विवृतमिति।

## सन्दर्भग्रन्थाः


1. आप्टे, वामनशिवरामः, (1989), सस्कृत हिन्दी कोशः, दिल्ली : मोतिलालः वनारसीदासः।
2. उनियालः,घनश्यामः(2002) पाणिनीय व्याकरणस्य भाषावैज्ञानिकं व्याख्यानम्, दिल्ली : अमरनाथ पब्लिकेशन्स्।
3. गौड, अशोकचन्द्रः,(1982), संस्कृतव्याकरणशास्त्रेतिहासविमर्शः,दिल्लीः इष्टेण बुक् लिंकस्।
4. दीक्षितो, भट्टोजिः, (1997) वैयाकरणसिद्धान्तकौमुदी, (बालमनोरमातत्वबोधिनीसहिता) प्रथमोभागः, दिल्ली : मोतीलाल बनारसीदास।
5. ..... (1985) सिद्धान्तकौमुदी, तत्त्ववोधिनी व्याख्या, दिल्ली : चौखम्बा संस्कृत प्रतिष्ठानम्।
6. नार्य, जी गङ्गाधरन्, (1997) संस्कृतव्याकरणचरितम्, केरलाः तृपुणितुरा।
7. पतञ्जलिः, (1988) व्याकरणमहाभाष्यम्, वाराणसी : चौखम्बा विद्याभवनम्।
8. ..,(2001) व्याकरणमहाभाष्यम्,प्रथमोभागः, दिल्ली : प्रतिभाप्रकाशनम्।
9. ...:,(2001)व्याकरणमहाभाष्यम्,सप्तमो भागः, दिल्ली : प्रतिभाप्रकाशनम्।
10. पाणिनिः,(2008) अष्टाध्यायी, वाराणसी : चौखम्बा सुरभारती प्रकाशनम्।
11. .....( 1977) अष्टाध्यायीसूत्रपाठः, श्रीनारायण मिश्रसम्पादितः, वाराणसी : चौखम्वा ओरिएण्टा।
12. महाभारतम् (उद्योगपर्वणि 42 l60)रामाश्रम,अमरकोश रामाश्रमी टीका।
13. मीमांसकः, आचार्योः युधिष्ठिरः, 2003, संस्कृतव्याकरणशास्त्र का इतिहास, प्रथमभागः, तृतीयसंस्करणम्, सम्पादकः रामनाथत्रिपाठी शास्त्री, वाराणसीः चौखम्बा पब्लिशर्स।
14. यास्कः, (सन् 1992, निरुक्तम्, उमाशंकर शर्मा ऋषिः:(सम्पा) वाराणसी : चौखम्बा विद्याभवनम्।
15. यास्कः,सन् 1989, निरुक्तम्, पं. श्रीमुकुन्दझा शर्मा, दिल्ली : चौखम्बा- संस्कृत- प्रतिष्ठानम्।
16. राजा राधाकान्तदेव, (1961) शब्दकल्पद्रुमम्, दिल्ली : नाग् पब्लिशेर्स।
17. वाल्मीकि, सं.2075, श्रीमद्वाल्मीकीय रामायण, त्रिपञ्चाशत सं., गोरखपुर :गीताप्रेसः।
18. शर्मा, गोविन्दप्रसाद, 2047, पाणिनीयव्याकरणस्यैतिहासिकं परिशीलनम्, वाराणसी : यतिराजग्रन्थमालाप्रकाशनम्।
19. शर्मा, वेङ्किट्रामः,(सम्पा)(1972) तैत्तरीयप्रातिशाख्यम्,कलकत्ता : गणेश प्रेस्।
20. सायणभाष्यसहितः, सन् 1810, ऋग्वेदः, अष्टम-संस्करणम्, शिवरामशास्त्री गोरे, बम्बई : दिल्ली : टूकाराम टटय।
21. ...... वि. सं. 1996,गोपथब्राह्मणम्, गंङ्गाविष्णुः, बम्बई : श्रीकृष्णदासः कल्याणः।
22. त्रिपाठी, आचार्य श्रीरामप्रसादः,(1997)पाणिनीयव्याकरणे प्रमाणसमीक्षा, वाराणसीः सम्पूर्णानन्द संस्कृत-विश्वविद्यालयः।
23. त्रिपाठी, कृष्णमणि,(1978),स्फोटवादविवेचनम्, वाराणसी : चौखम्बा सुरभारती प्रकाशनम्।
24. न्यमि क्तगपभच। (™IÉ™æh) एबलष्लष् ( ज्ष्क एबिअभ ष्ल क्बलकपचष्त ीष्तभचबतगचभ, ीयलमयल,त्वगदलभच,ज्ञडटज्ञ। चउत, ब्बिजबदबम।



*विद्यावारिधिः*

*सहप्राध्यापकः संस्कृत विद्यापीठम्, रिडी, गुल्मी।*

ISSN 2582-2616

# आयुर्वेदशास्त्रे ओषोधिचिकित्सायाः गुरुत्वम्-एका समीक्षा

**डॉ. स्मृतिः सरकारः**

**संक्षिप्तसार-**

सभ्यतायाः आदितः मानवाः रोगस्य तथा तस्य निवारणार्थं विविधानामुपायेन विविधप्रयत्नं कुर्वन्ति। अतः मनुष्यानाम् एवंविधा प्रवृत्तिः अनन्तरे चिकित्साविज्ञानरूपेण प्रतिष्ठिता। अस्य विज्ञानरुप- प्रवृत्तिकर्मेषु भारतवर्षे आयुर्वेद-पद्धतिः अन्यतमा। केवलमेव आयुर्वेदचिकित्सामाध्यमेन पंचभूतात्मकशरीरस्य रोगव्याधिः दूरीभूता भवति। सहस्रवत्सरपूर्वं आविष्कृतम् ईदं शास्त्रज्ञानम् अद्यतन- समाजे अपि मनुष्यानां रोगनिवारणे समर्थीभूतम्। आयुर्वेदशास्त्रे विविधाः प्रकाराः चिकित्साः प्रचलिताः, तासु ओषधी-चिकित्सा अन्यतमा। वनस्पतिभिः या ओषधिः प्राप्यते, सा रोगदूरीकरणे समर्था भवति, तस्मादुच्यते, ''ओषंरुजंधयतिइतिओषधिः''। ओषधेः समर्थकाः शब्दा एव वीरुधः, वनस्पतिः भेषजः इत्यादयः। विविधशास्त्रे अपि बहवः ओषधयः व्यवहृताः। तत्र ओषधीनामुपयोगः पृथक् पृथक् दृश्यते। या ओषधिः आयुर्वेदचिकित्सायां विशेषरुपेण व्यवहृता। एतदर्थम् ओषधीचिकित्सा नाम पृथक् चिकित्सा प्रसिद्धा।

प्राचीनकालवत् आधुनिककाले अपि विविधशास्त्रे बहूनां ओषधीनामुल्लेखः प्राप्यते। यासाम् ओषधिगुणमस्ति तथा च या एकवारं फलं धृत्वा म्रियते, सा ओषधि इति आयुर्वेदशास्त्रे चिकित्सामाध्यमरुपेण ओषधयः बहुप्रकाराः सन्ति। एतासु ओषधिषु अगुरुः , माधवीलता, गुग्गुलः, अर्जुनः, मातृकालता च अन्यतमाः। एतासाम् ओषधीनाम्; नाम वृक्षस्य काष्ठस्य ओषधीगुणम् अनवद्यम्। अस्मात् काष्ठात ?

उत्पन्नः धुमः दुर्गन्धः-विषः-जीवानुनाशे च समर्थः। अन्यानां वनस्पतीनामपि महती भूमिका अस्ति।

अधुना करोणा नाम महामारिकाले भारतवर्षे बहवः स्वास्थ्यसंस्थाः करोणा; नाम गुरुरोगस्य निवारणार्थे सदा प्रयत्नशीलाः दृश्यन्ते। ते आयुर्वेदिक-ओषधिविषये अस्मभ्यं परामर्शमपि यच्छति। अस्या टीका अधुना प्रचलिता। गवेषकाः बहुप्रयत्नेन ओषधीनाम् आविष्कारं कुर्वन्ति, तेषां कठोरप्रचेष्टा अस्माकं कृते आगमनि दिवसे अवश्यमेव फलवती भविष्यति।

अतः वर्तमानगवेषणाप्रबन्धे प्राचीनतः आधुनिकिकाले विविध-ओषधि-माध्यमेन केन प्रकारेण चिकित्सा प्रचलिता, वर्तमाने तस्याः उपयोगिता का अस्ति, एतद्विषये विषदीकृता भविष्यति इति दिक्।

**1. भूमिकाः**

प्राचीनकालादेव भारतवर्षः आयुर्वेदचिकित्सायायां प्रसिद्ध एव। परन्तु कदा आयुर्वेदचिकित्सा आगच्छाति स्म कदा वा अस्याः उन्नतिः अभवत्, एतत् सम्यग्रूपेण न ज्ञायते। आयुर्वेदशास्त्रे बहुविधचिकित्सासु ओषधिचिकित्सा अन्यतमा।

**1.1 ) ओषधीनां परिचयः**

सामान्यतः ओषधीनाम् अर्थः क्षुद्रः वृक्षः, परन्तु विशिष्टार्थः या रोगनिवारणे समर्था, कुमारसम्भवमानुसारतः या स्नेहव्यतिरेकं रात्रौ ज्योतिरूपेण प्रकाशति सा ओषधिः[1]। ओषो इति रसः, अतः यस्यां रसो विद्यते सा ओषधिः। चरकसंहितायाम् ओषधेः वैशिष्ट्यमुल्लिखितम्[2]। वैदिकसहित्ये ओषधिचिकित्साविषये विविधानि प्रमाणानि सन्ति। प्राचीनकालादेव मानवः शरीरविषये यत्नशीला आसन्। तस्मात् वेदेषु ओषधीनामुद्दिश्य विविधा प्रार्थना दृश्यते। ऋग्वेदे ओषधिः मातारुपेण पूज्यते, अपि च ऋग्वेदे केवलं सम्पूर्णमेकं सूक्तं ओषधिविषये वर्तते[3]। अथर्ववेदे बहवः वनस्पतयः ओषधिरूपेण व्यवहृताः[4]। परन्तु मनुसंहितायाम् ओषधिवनस्पतयोः च प्रभेदः पृथकरूपेण दृश्येते[5]। एतेषां वनस्पतीनामुपयोगः पृथक् अस्ति , आयुर्वेदशास्त्रे विशेषरूपेण अस्याः व्यवहारः परिलक्ष्यते। एतदर्थं ओषधिचिकित्सा नाम भिन्ना चिकित्स्या ख्याता।

**1.2 )** ओषधीनाम् उत्पत्तिस्थानः ओषधीनां संख्या, तासाम् उत्पत्तिस्थानः एव वैदिककालात् ज्ञायते। ऋग्वेदे ओषधीनां संख्याः एकशतम् इति उल्लिखितम्[6]। ओषधीनां प्रकृतस्थानरेव सप्तसंख्यकाः भवन्ति। अस्याः उत्पत्तिस्थानम् हिमालयपर्वतम्। परवर्तिनि काले अपि चरकसंहितायां हिमालयरेव ओषधेः उत्पादनस्य सुष्ठुस्थानरूपेण निर्दिश्यते[7]।

**2 ) प्राचीनकाले ओषधिचिकित्सायाः एका समीक्षाः-**

आयुर्वेदविषये सर्वेषु वेदेसु तथा स्मृतिशास्त्रे, पुराणे, चरकसंहितायां, शुश्रितसंहितायां, विविधकाव्ये, नाटके च बहवः चर्चाः भवन्ति, एतदर्थं बहवः ग्रन्थाः अपि सम्पदिताः[8]। परन्तु अथर्ववेदे आयुर्वेदस्य वर्णना अतिविस्तारेण परिलक्ष्यते। अतः आयुर्वेदः अथर्ववेदस्य उपांगरूपेण

चर्चितः। आयुर्वेदे विविधचिकित्सायासु ओषधिचिकित्सापि वर्णिता। अथर्ववेदे बहवः रोगाः दृश्यन्ते, ये रोगाः केवलं ओषधिचिकित्सायायाम् उल्लिखिताः[9]। एतेषु – कुष्ठरोगः, मनोरोगः, क्लीवरोगः, मधुमेहरोगः च अन्यतमाः, ऋग्वेदे अथर्ववेदे च दृश्येते शरीरस्य निर्दिष्टे अङ्गे ओषोधिसेवनेन रोग – दुरीभूतो भवति[10]। यजुर्वेदे अपि ओषधीनां महत्वपूर्णा भूमिका दृश्यते। ओषधिः अत्र श्रेष्ठद्रव्यरूपेण प्रतिष्ठिता[11]। एतासाम् ओषधीनां बहवः वर्गाः सन्ति। चरकसंहितायाम् अस्या वर्गाः उल्लिखिताः[12]। ओषधिचिकित्सायायां वैद्य –भिषगापि अपि नियुक्तवान्। ऋग्वेदानुसारे यः वैद्यः बह्मज्ञानं धृतवान्, सः एव प्रकृतः वैद्यः[13]। अश्विनद्वयः रुद्रः च वैद्यभिषकरूपेण प्रसिद्धाः। ते एव देवतानां चिकित्सकाः भवन्ति। तत्काले अपि ओषधेः विक्रयव्यवस्था प्रचलिता, येन वैद्यः तस्य जीवनम् अतिवाहितम्। ओषधीनाम् उपयोगविषये प्राचीनकाले बहवः चर्चाः दृश्यन्ते । वेदे बहूनां जीवनदायी– ओषधीनाम् उल्लेखः प्राप्यते। एतासाम् ओषधिगुणं विविधं, तन्मध्ये पिप्पली, अर्जुनः, कर्करी, हरिणश्रृंङ्गः च अन्यतमाः। पिप्पली क्षयरोगं, वातरोगं, उन्मादरोगं च निवारयति[14]। हरिणश्रृंङ्गस्य वल्कलेन प्रधानतः चर्मरोगं, कुष्ठरोगं दुरीभूतम्[15]।

**3 ) आधुनिककाले ओषधिचिकित्साया एका समीक्षाः ब्रिटिश**–शासनकाले आयुर्वेदशास्त्रस्य विधिवत् शिक्षा तथा तस्य उन्नतिविषये अधिका चिन्ता न कृता। परन्तु भारतवर्षस्य स्वतन्त्रतालाभात् परतः आयुर्वेदशास्त्रे चिकित्साविषये पुनः प्रयत्नः परिलक्षते। तस्मात् अस्य महद्गुरुत्वमनुभूयः प्राचीनकालवत् वर्तमाने बहवः चर्चाः भवन्ति। आयुर्वेदचिकित्स्यार्थं बहवः स्वास्थ्यसंस्थाः चिकित्सालयाः च निर्मिताः एव। एतासां संस्थायां अधुना अनेकाः गवेषकाः अपि नियुक्ताः दृश्यन्ते। अधुना सर्वाधिकप्रचलिता संस्था एव Ministry of Health and Family Welfare इति, Ministry of AYUSH इति च अपरा गुरुते पूर्णे संस्थे[16]। भारतवर्षे सर्वाधिकाः वनस्पतयः ओषधयो वा उत्पद्यन्ते। यद्यपि तेसु सप्ताधिकासहस्त्रतमाः वनस्पतयः केवलमेव रोगनिवारणे व्यवहृतम्। भारतवर्षस्य आञ्चलिकप्रान्ते वनवासकारिणः बहवः संख्यकाः जनाः प्रधानतः ओषधीनामुपरि निर्भरशीलाः। अतः तत्र अधिकाः आयुर्वेदिक–चिकित्सायाः भवितुं शक्यते। वर्तमाने करोणासंकटकाले चिकित्साक्षेत्रे बहवः प्रचेष्टाः दृश्यन्तेऽद्य चिकित्सकाः अपि कठोरप्रचेष्टां कुर्वन्ति। सरकारिप्रतिवेदनात् ज्ञायते, करोणाटीका अधुना सुलभ्यं भवितुम् अहर्ति। सपिधनात् परतः माननीयप्रधानमंत्रीमहोदयेन सर्वेषां जनानां कृते उक्तवान् यत्, आयुष इति आयुर्वेदिकसंस्थायाम् उपदेशस्य अनुसरणं कर्तव्यम्। इयं संस्था शारीरिकशक्तिबर्धनार्थं गृहकर्मणि व्यवहृतस्य बहुप्रकारस्य आरोग्यद्रव्यस्य व्यवहारार्थं परामर्शं यच्छति सदा।

**4 ) ओषधीनां गुरुत्वं प्राचीने आधुनिके चः एका समीक्षाः**–आधुनिककाले अपि विविधशास्त्रे बहूनां ओषधीनामुल्लेखः दृश्यते। एतासां विविधं गुरुत्वमपि आयुर्वेदशास्त्रे अस्ति। एतासु ओषधिषु अगुरुः, माधवीलता, गुग्गुलुः , अर्जुनः, मातृकालता च अनन्तमाः। अत्र तासाम् ओषधीनां परिचयं गुरुत्वमपि प्रदीयते–

**4.1 ) अगुरुः**–अगुरु इति प्राचीनः संस्कृतशब्दः। अस्य आधुनिको नामः आगर इति, विज्ञानसंमतो नाम च Aquilaria Malaccensis इति। अस्य सामान्यार्थः यस्य भारं नास्ति इति, परन्तु प्रकृतया अस्य वृक्षस्य काष्ठम् अतीव भारयुक्तम्। कालिदासस्य ऋतुसंहारे अगुरुवृक्षमुल्लिखितम्। अस्य प्रधानोपयोगो हि धूमः सृष्टिः। अयं धूमः अतीव सुगन्धयुक्तः, यस्मात् नारीणां केशाचर्चार्थम् इमं धुमं व्यवहृतम्। अतः कालिदासेन ऋतुसंहारे अस्य गुरुत्वविषये उल्लिखितं यत्–''अगुरुसुरभिधूपमोदितं केशपासं''..[17]



अगुरुः (अगुरः)

उपयोगिताः अगुरो धूममाध्यमेन दुर्गन्धः, जीवाणुः च दुरीभूतौ। अस्य वृक्षस्य वल्कलेन श्वासयन्त्रस्य यकृतस्य च वेदना दुरीभूता। न केवलं ओषधिरूपेण अपि च अनेन लेखनीद्रव्यमपि निर्मितम्। प्रसिद्धः 'आतरो' नामसुगन्धिः अपि अस्माद् उत्पद्यते।

ISSN 2582-2616

**( 4.2 ) अमृतलता**:-वर्तमाने अमृतलता इति शब्देन सह सामान्यतः परिचयो नास्ति। आधुनिककाले अस्याः नाम तावत् गिलोयः गुरुचिः वा। अस्याः विज्ञानसंमतो नाम एव Trinospora Cordifolial इति। आयुर्वेदचिकित्स्यायां 'गिलोय' इति अमृतवत् कार्यं करोति।



अमृतलता ( गुरुची )

उपयोगिताः इयं डेंगूः, स्वाइनफ्लूः, म्यालेरिया इत्यादयः ज्वरनिवारणे समर्था भवति। न केवलं तत् मानसिकचिंता दूरीकरणे, मधुमेहरोगे दूरीकरणे च समर्था इयम्। अतः इयं बहुमूल्यलता बहुविधरोगनिवारणे समर्था भवति । अस्यां लतायां विटामिन, A, C, D, B/12 प्रभृतयः अपि सन्ति, ये खलु बहुविधरोगप्रतिरोधे समर्थाभूताः।

**( 4.3 ) गुगुलुः**

अस्य आधुनिको नाम गुगुलः, विज्ञानसंमतो नाम हि Commiphora Wightii इति इयमेव उपयोगी ओषधिः। गूगुलुः एकप्रकारः गोदविशेषः। अस्य उपयोगिता चरकसंहितायां, शुश्रुतसंहितायां च दृश्येते।



**गूगुलुः ( गुगुलः )**

उपयोगिताः गुगुलुः प्रधानतः जीवणुनाशनार्थं व्यवहृतः। बाणभटटेन कादम्वरीकाव्ये अस्य गुरुत्वं वर्णितम्। अत्र श्रूयते, अस्माद् उत्पन्नात् नीलवर्णः धूमः जीवाणुनाशने समर्थः, रक्तपरिशोधणे अपि समर्थभूतः। अथर्ववेदानुसारे ज्ञायते यत्, गुगुलुधूमेन यक्षनाशोऽपि भवति[18]।

**( 4.4 ) माधवीलताः**

अस्याः विज्ञानसन्मतो नाम Hipatage Beghalensis इति। अस्याः उल्लेखः कालिदासेन अभिज्ञानशकुन्तले कृतम्[19]। अतीव मनोरमा इयं लता पुष्पेण शोभिता दृश्यते। तस्मात् विविधकाव्यसाहित्ये अस्याः उल्लेखः दृश्यते[20]।



**माधवीलता ( हालदावेलः )**

उपयोगिताः अस्याः ओषधेः काष्ठं, पुष्पं, पत्रम् इत्यादयः आयुर्वेदिक-ओषधिरूपेण व्यवहृताः। आयुर्वेदशास्त्रानुसारे इयं स्मृतिशक्तिबर्धने, ज्वरप्रदाहनिवारणे, प्रश्वासक्षमतावर्धने च समर्थाः भवन्ति।

ISSN 2582-2616

**4.5 ) तुलसी:**

विज्ञानसन्मतो नाम Ocimum Tenuiflorum इति। महाभारतानुसारे इयं ओषधि: पुत्रवत् परिलानं कर्तव्यम्[21]। पद्मपुराणानुसारे तुलसीपत्रस्य पुष्पं, शाखा, फलं, मूलं च सर्वे उपयोगा: सन्ति[22]। अस्या: बहव: भेदा: सन्ति, यथा – रामतुलसी, कर्पूरतुलसी, कृष्णतुलसी, वानतुलसी च इत्यादया:। इमा: भिन्ना: अपरा: बहुप्रकारा: भेदा: सन्ति। अत्र निम्नक्रमेण चतुर्विधानां तुलसीनां चित्रं प्रदीयते।



**तुलसी ( रामतुलसी, कर्पूरतुलसी, कृष्णतुलसी, वनतुलसी च )**

उपयोगिता: तुलसी मधुमेहे, दुश्चिन्तानिवारणे, रक्तचापे, जीवणुनाशे अपि समर्था। अथर्ववेदे ओषधिरूपेण तुलस्या: उपयोगिता वर्णिता। विविधानां तुलसीनां विविधा: उपयोगिता: सन्ति, यथा–

(4.5.1) रामतुलस्या: उपयोगिता: तुलसीपत्रेण ज्वरं पत्तिश्यायं शैत्यं दुश्चिन्तां च निवारितम्। अत: तुलसी प्रधानत: अस्माकं कृते उपजिवकरूपेण कार्यं करोति।

(4.5.2) कर्पूरतुलस्या: उपयोगिता: इयं तुलसी प्रधानत: प्रतिजीवानुनाशे, प्रतिकर्कटनाशे समर्था भवति।

(4.5.3)कृष्णतुलस्या: उपयोगिता: अनया तुलसीपत्रेण ज्वरं पत्तिश्यायं चर्म रोगं च निवारितम्, कीटपतङ्गा: अपि अनया दूरीकृता: भवन्ति।

(4.5.4) वनतुलस्या: उपयोगिता: इयमेव एकोपजीवकरूपेण कार्यं करोति। प्रधानत: इयं रक्तचापं निवारयति अपि च सहजपाचनं करोति।

**( 5 ) उपसंहार:**

रोगनिवरणार्थं शान्तिलाभार्थं च प्राचीनकाले मानवा: प्राकृतिक–खनिज–सामुद्रिक–प्राणीज–उद्भिजवस्तूनामुपरि अधिका: निर्भरा: आसन्। एतेषु उद्भिजायुर्वेदस्य जां मध्ये ओषधे: उल्लेख: प्राप्यते। अधुनापि एता: ओषधय: बहुस्थाने परिलक्ष्यन्ते, यस्या: गुरुत्वम् अनवद्यमेव । इदं गुरुत्वं क्रमश: वर्धते, यस्मात् अस्माकं देशे तथा च बहिर्देशे ओषधिमाध्यमेन चिकित्स्यापि प्रचलिता। एवमपि ज्ञायते, आयुर्वेदिकपरीक्षा कोविड–19 इति रोगीनां कृते अपि सम्भवति। वर्तमाने अस्मिन् संकटे केवलमेव अस्माकं शरीरस्य शक्तिवर्धनमेव आवश्यकम्। अत: केवलम् आयुर्वेद–ओषोधि सेवनेन एतत् सम्भावितं भवति। अधुना दक्षिणभारते ओषधिमाध्यमेन चिकित्सापि प्रचलिता। आयुर्वेदिक–ओषधिमाध्यमेन चिकित्सा आगामीषु दिवसेषुसर्वत्र फलवती भविष्यति इति आशा अस्ति। अन्तिमे वक्तव्यं यत्, ओषधि: मनुष्यजीवने सुखं ददाति, तस्मात् ऋग्वेदे ओषधिसेवनेन सर्वरोगमूलं दुरीभवति इति कथितम्, श्रूयते अत्र–

**''यदिमा वाजयन्नहयोषधीरहस्त आधत्ते।**

**आत्मा यक्ष्मस्य नश्यति पूरा जीव गृभो यथा[23] ।।**

**अन्त्यटिका:**

1. ''यत्र ओषधयो राजन्यामतैलपूरा: सूरतप्रदीप:'' कुमारसंभवकाव्यम्, 1/10
2. चरकसंहिता, 1
3. ऋग्वेद:, ''या ओषधी:पूर्वा: जाता देवेभ्य:....... शतं धामनि सप्त च''।।, 10/97/1
4. अथर्ववेद:, 4/37/4–6
5. मनुसंहिता, 1/46–47
6. ऋग्वेद:, ''... शतं धामनि सप्त च'', 10/97/1
7. चरसंहिता, 1
8. अत्रिदेव, आयुर्वेद का बृहद् इतिहास, लोख्नोउ, 1976.
9. तदेव, 1/12, 1/25
10. अथर्ववेद: 2/33/5, ऋग्वेद: 10/164/4–6
11. यजुर्वेद:, वाजसनेयी–संहिता, 12/75–79

ISSN 2582-2616

12. चरकसंहिता, 1
13. ऋग्वेदः, 10/19/22
14. अथर्ववेद:6/109/1-3
15. अथर्ववेदः 3/7/1-3
16. 222. ayusyaayurveda.com
17. ऋतुसंहारः , 4.5
18. अथर्ववेदः 19/35/1-3
19. अभिज्ञानशकुन्तला , 3/65
20. तदेव, 7/65
21. महाभारतम्, अनुपर्व, 58/51
22. पद्मपुराणम्, उत्तरकाण्डम्, 24/2
23. ऋग्वेदः, 10/97/1

**Bibliography :**


1. Aitareya Brahmana, Ed. & trans. (Hindi) with the comm. of Vedartha-prakasaof Saya?acarya, Sudhakar Malaviya, 2 vols, Prachyabharati Series 14-15, Varanasi: Tara Printing Works, 1983.
2. Atharvaveda Sa?hita (Saunakiya), Ed. with the comm. of Saya?acarya, Vishva Bandhu, Vishveshvaranand Institute Series 13-16, 5 vols, Hoshiarpur: Vishveshvaranand Vedic Research Institute, 1960-64.
3. Atrideva, Sanskrit Sahitya me Ayurveda (Hindi),Venaras : Bharatiya Jagyapeeth Kashi, 1956.
4. Banerjee , Manabendu, Ancient Indian Science and Technology, Kolkata : Sanskrit. Sahitya Parishad 2003, Krishnalal, Mumbai: Mubaimitrakhya 1960.
5. Manu-Smrti, Ganganath Jha, Kolakata : Asiatic Society, 1932.
6. Upadhyay, C.S., Vaidik Kosa, 3 vols, Delhi: Nag Prakashak, 1995.
7. Singh, Ranjit , The encyclopedia of Ayurvedic Dictionary , Vol. I, Itava : Hoshiarpur, 1934.
8. https:/ www.researchgate.net, 30.07.20.



*सह अध्यापिका, संस्कृतः विभागः*

*गोवरडांगा हिंदुमहाविद्यालयः, पश्चिमवङ्गः*

ISSN 2582-2616

# कृष्णपण्डितप्रणीते कंसवधनाटके ध्वनिविमर्शः

**डॉ. फिरोज**

नाटकमेतत् जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्यायेन पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मज-काशीनाथशर्मणा, पणशीकरोपाह्वलक्ष्मणशर्मात्मजवासुदेवशर्मणा च संशोधितम्। अस्य प्रकाशनं मुम्बय्यां निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रयित्वा पञ्चत्रिंशदुत्तरएकोनविंशतिशततमे (1935) ख्रिष्टाब्दे कृतम्।

कंसवधनाटके सप्त अङ्काः सन्ति। अस्य नाटकस्य विषये आधुनिककविभिः राधावल्लभत्रिपाठिभिः चर्चा विहिता। किन्तु एतैः कंसवधनाटके षडेव अङ्काः कथिताः। यथा 'संस्कृत साहित्य का अभिनव इतिहास' इति पुस्तके लिखितम्-

'प्रतिष्ठित विद्वत्कुल में जन्मे शेष श्रीकृष्ण एक कवि और नाटककार के रूप में समादरणीय हैं। इनके पिता नरसिंह व्याकरणशास्त्र के अपने समय के सर्वोच्च पण्डितों में से एक थे। इनका कंसवधनाटक छः अङ्कों का नाटक है जिसमें राधा की वियोग व्यथा और सुदामा के सख्य का चित्रण करते हुए कवि ने कृष्ण के जन्म से लेकर कंसवध तक की घटनाओं का चित्रण किया है।'

नाटकेऽस्मिन् कुत्र विलसते ध्वनिरिति विचारात् प्राक् ध्वनेः सामान्यपरिचयः दीयते-

**ध्वनेः सामान्यपरिचयः-**

शब्दार्थशरीरस्य काव्यस्य जीवातुभूततत्त्वं किमिति विचारे सति काव्यशास्त्रे सम्प्रदायप्रवर्तकैः विविधानि मतानि दर्शितानि। कैश्चित् रसः, कैश्चित् अलङ्कारः, अन्यैः रीतिः, अपरैश्च वक्रोक्तिः, अथ च कैश्चित् औचित्यम्, अन्यैश्च ध्वनिः प्रतिपादितः। काव्यमीमांसाकारेण भणितम्-

**'ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना।**
**आनन्दवर्धनः कस्य नासीदानन्दवर्धनः।।'**

सर्वादौ ध्वनिः आनन्दवर्धनेनैव दृग्गोचरीकारितः। ततः अभिनवगुप्तमम्मटजगन्नाथविश्वनाथादिभिः समृद्धिं नीतः। अयं ध्वनिशब्दः वैयाकरणैः प्रधानस्फोटरूपार्थस्य व्यञ्जके शब्दे कृतः। तदनन्तरं आनन्दवर्धनाभिनवगुप्तमम्मटादिभिः काव्यमर्मज्ञैः प्रधानभूतस्य काव्यविशेषस्याभिव्यञ्जके न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगले कृतः असौ ध्वनिशब्दः व्यवहृतः। यथा काव्यप्रकाशकारो भणति-

''बुधैः व्याकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः। ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य।''

**आनन्दवर्धनेन ध्वनिविषय उक्तम्-**

**''यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।''**

कारिकेयं प्रतिपादयति यत् यत्र वाच्यविशेषः अर्थो वाचकविशेषश्च शब्दो वा स्वमुत स्वकीयार्थं, अर्थश्च स्वमुपसर्जनीकृत्य तं सहृदयश्लाघ्यं काव्यत्मारूपेण विलसितमर्थं व्यङ्क्तः स काव्यविशेषः ध्वनिरिति ज्ञेयः।

असौ ध्वनिः न केवलं काव्यविशेषबोधकोऽपितु पञ्चविधार्थज्ञापको वर्तते। ते च अर्था विद्यन्ते-

1. ध्वनतीति ध्वनिः, अर्थात् व्यञ्जकः शब्दो ध्वनिः।
2. ध्वनतीति ध्वनिः, अर्थात् व्यञ्जकः अर्थो ध्वनिः।
3. ध्वन्यतेऽनेनेति ध्वनिः, अर्थात् व्यञ्जनाव्यापारो ध्वनिः।
4. ध्वन्यते य इति ध्वनिः, अर्थात् रसादिव्यङ्ग्यार्थो ध्वनिः।
5. ध्वन्यतेऽस्मिन्निति ध्वनिः, अर्थात् काव्यविशेषो ध्वनिः।

काव्येषु सहृदयश्लाघ्यः अत्यन्तं चमत्कारकारी यः कोऽपि विलक्षणचारुत्वयुतोऽर्थो वाच्यलक्ष्यार्थापेक्षया नितरां भिन्नः सन् प्राधान्येन प्रतिभासते तथा च स एव अङ्गनासु लावण्यमिव महाकवीनां वाणीषु सहृदयलोचनपीयूषकल्पः प्रतीयमानार्थः सारभूतः काव्यस्यात्मेति सिद्धान्तो ध्वनिवादिनाम्।

यथोक्तम्- **''योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।।**
**तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।**
**बहुधा व्याकृतः सोऽन्यैः ततो नेह प्रतन्यते।।**

ISSN 2582-2616

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।**
**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वामागतः।।''**

स च प्रतीयमानार्थः सर्वथा वाच्याद् विलक्षणो वर्तते। अस्य प्रतीतिः काव्यत्त्वज्ञानां ह्रदयेषु जायते। न जायते शब्दशासनमात्रवेदिनां ह्रदयेषु। वस्तुतः अस्यैव व्यङ्ग्यार्थस्य व्यञ्जकस्य च समुचितसन्निवेशः सुतरामभ्यर्हितोऽस्ति काव्ये।

महाकवीनां काव्येषु व्यङ्ग्यव्यञ्जकयोः प्राधान्यात् व्यङ्ग्यव्यञ्जकभावस्य अर्थात् व्यञ्जनाव्यापारस्य प्राधान्यं स्वत एव जायते। तदर्थं वाच्यवाचकभावोऽपि समाश्रणीयो भवति साधनत्वेन, साध्यस्तु व्यङ्ग्यार्थ एव।

ध्वनिरयं वाच्यार्थस्य विवक्षाऽविवक्षात्वेन द्विधा–

1. अविवक्षितवाच्यध्वनिः 2. विवक्षितान्यपरवाच्यध्वनिः

1. अविवक्षितवाच्यध्वनिः–यत्र वाच्यार्थो विवक्षितो न भवति तत्र अयं ध्वनिप्रकारः जायते। अस्य ध्वनेः नामान्तरं लक्षणामूलध्वनिः वर्तते। अस्य भेदद्वयम्–

(क) अत्यन्ततिरस्कृतवाच्यः (ख) अर्थान्तरसङ्क्रमितः

विवक्षितान्यपरवाच्यध्वनौ वाच्यार्थो विवक्षितो भवति, किन्तु अपरत्वेन न तु प्राधान्येन।

अर्थात् वाच्यार्थस्य यत्र पर्यवसानं व्यङ्ग्यार्थे भवति, सः विवक्षितान्यपरवाच्यध्वनिः। अस्य अपरं नाम अभिधामूलध्वनिः वर्तते। अस्मिन्नेव भेदे वस्त्वलङ्काररसादिरूपप्रतीयमानार्थः सुतरामभिव्यज्यते।

अभिधामूलत्वेन स्वीकृतः प्रतीयमानार्थोऽपि लौकिकऽलौकिकश्च इति अभिनवगुप्तेन लोचनटीकायां भेदद्वयं कथितम्।

अभिव्यक्तेः क्रमेणापि ध्वनेरिदं द्वैविध्यं प्रतिपादितम्–

1. असंलक्ष्यक्रमव्यङ्ग्यः 2. संलक्ष्यक्रमव्यङ्ग्यः

यत्र प्रतीतौ विभावानुभावव्यभिचाराणां क्रमः झटित्येव न प्रतीयते तत्र असंलक्ष्यक्रमव्यङ्ग्यः ज्ञेयः।

नेदं तथ्यं यत् विभावादीनां तत्र कश्चन क्रमो न भवति, अपितु अवश्यमेव तत्र क्रमो भवति, किन्तु लाघवान्न ज्ञायते शतपत्रभेदन्यायेनाकलन–विरहात्। न भवति तत्र अक्रमता, अपितु क्रमस्य असंलक्ष्यतेति अस्ति वैशिष्ट्यं तत्र।

यत्र वस्तुनोऽलङ्कारस्य वा प्रतीतिः क्रमेण झटित्येव बुद्धौ जायते, तत्र संलक्ष्यक्रमव्यङ्ग्यध्वनिः ज्ञातव्यः। अस्य ध्वनेः भेदाः सन्ति–

1. शब्दशक्त्युत्थः– अस्मिन् शाब्दव्यञ्जनया वस्तुरूपस्य उत अलङ्काररूपेणानुरणनरूपव्यङ्ग्यार्थस्य अभिव्यक्तिः जायते। अस्य शब्दशक्त्युत्थे अर्थात् शब्दशक्तिमूलध्वनिकथने हेतुरयं वर्तते, यस्मात् शब्दात् यो व्यङ्ग्यार्थः जायते तस्य शब्दस्य पर्यायात् स व्यङ्ग्यार्थः नोत्पद्यते। अभिप्रायोऽयमस्ति यत् शब्दपरिवर्तने अर्थोऽपि परिवर्तनं याति। अस्मिन् शब्दपरिवृत्त्यसहत्वं वर्तते।

अयं द्विधा वस्त्वलङ्काराभ्याम्। अस्मिन् वस्तुध्वनौ केवलं वस्तुन एव शाब्दव्यञ्जनया प्रतीतिर्जायते। यद्यपि अलङ्कारोऽपि वस्त्वन्तर्गतो भवति, किन्तु गोबलीवर्दन्यायेन अलङ्कारभिन्नव्यङ्ग्यं वस्तुमात्रं पृथक् कृतम्। अलङ्कारध्वनौ शाब्दव्यञ्जनया अलङ्काररूपव्यङ्ग्यार्थो भवति। स चार्थः सह्रदयह्रदयाह्लादकारकः भवति।

2. अर्थशक्त्युत्थः– अस्मिन् आर्थव्यञ्जनया अनुरणनसदृशव्यङ्ग्यार्थस्य अभिव्यक्तिः भवति। अत्र कस्यचित् शब्दस्य पर्यायेणापि स एवार्थोऽभिव्यक्तो भवति अर्थात् शब्दपर्यायस्य परिवर्तने सत्यपि स एव अर्थः अभिव्यक्तो भवति यः पूर्वम् आसीत्। अस्मिन् शब्दपरिवृत्तिसहत्वमस्ति। अत्रादौ व्यञ्जकोऽर्थो त्रिविधो भवति–

(क) स्वतः सम्भवी– अर्थोऽयं स्वतः सिद्धो भवति। अस्य व्यावहारिके जीवने अस्तित्त्वं भवति। अथ चायं नैव भवति केवलकल्पनाप्रसूतः।

(ख) कविप्रौढोक्तिसिद्धः– कविः स्वकीयया नवनवोन्मेषशालिन्या प्रतिभयैव तस्यार्थस्य कल्पनां विधातुं शक्नोति। तस्य कल्पितार्थस्य लोकेऽस्तित्त्वं स्यादिति नैवावश्यकम्। अयञ्चार्थः कल्पनाप्रसूतः।

(ग) कविनिबद्धवक्तृप्रौढोक्तिसिद्धः– अयञ्चार्थः कविना नायकादिरूपेण उद्भावितस्य वक्तुः प्रतिभया कल्पितो भवति।

इत्थं एतेषां त्रिविधार्थानां प्रत्येकं स्य दौ भेदौ–

* वस्तुरूपव्यञ्जकार्थः * अलङ्काररूपव्यञ्जकार्थः

इत्थं व्यञ्जकोऽर्थः षड्विधो भवति। ते षड्विधाः भेदाः पुनः द्विधा वस्त्वलङ्काराभ्याम्।

एवमस्य शब्दशक्त्युत्थध्वने अष्टादश भेदाः सन्ति।

3. उभयशक्त्युत्थः– अत्र शाब्द्यार्थीभ्यां द्वाभ्यां व्यञ्जनाभ्याम् अनुरणसदृशो व्यङ्ग्यार्थोऽभिव्यज्यते। शब्दार्थौ अस्मिन् व्यङ्ग्यस्य प्रतीतिं विदधतः। तस्मात् भिन्नभिन्नेषु अंशेषु परिवृत्त्यसहत्वपरिवृत्तिसहत्वयोः शब्दयोः प्राधान्यं भवति। अस्य केवलम् एक एव भेदः।

इत्थं ध्वने: सामान्यपरिचयं विलिख्य सम्प्रति अस्य सत्ता दृश्यते कंसवधनाटके।

1. वस्तुध्वनि:

**यद्दोर्दीप्यत्प्रतापानलबहलवलज्ज्वालजालावलीढः,**
**शिश्ये शौरिः पयोधौ तुहिनगिरिदरीष्वन्धकारिर्निलिल्ये।**

बह्मा पद्मासन: सन्गमयति समयं तापसच्छद्मना त-

**द्रक्षोयक्षोरगाणामिह बत कतमो वीक्षितं मे क्षमेत।।**

कंसस्य प्रतापानलेन उष्णत्वात् विष्णुः सागरे, ब्रह्मा तापसच्छद्मना पद्मासन: सन्गमयति। अत: कंसस्य पुरत: कोऽपि न स्थातुं शक्नोति इति वस्तु व्यज्यते। अतोऽत्र वस्तुध्वनि: वर्तते।

नावज्ञेयो रिपुरिति लघु: क्षीणसत्वोऽपि विज्ञै-

**र्हन्तारण्यं दहति शनकैः सञ्चिताङ्गः स्फुलिङ्गः।**
**किं च न्यञ्चन्निभृतनिभृताकुञ्चिताङ्गो विडालः,**
**कालापेक्षी ग्रसति सहसालक्षितोत्फालमाखुम्।।**

लघु: क्षीणसत्वोऽपि शत्रु: नोपक्षणीय:, यतोहि सञ्चिताङ्गः अपि स्फुलिङ्गः शनकैः वनस्य दहनं करोति। एक: कालापेक्षी विडालोऽपि सहसा लक्षितोत्फालमुखं मूषकं ग्रसति। अत: कृष्ण: बालक: सन्नपि नोपेक्षणीय इति वस्तु व्यज्यते।

2. अलङ्कारध्वनि:-

**सारस्वते स्रोतसि दूरमग्नैः सुधीवरैरुद्धृतसूक्तिरत्नैः।**
**न तत् किमप्युर्वरितं यदेषामुपायनीकृत्य पुरो भवेयम्।।**

अत्र सूत्रधार: नटीं वक्ति यत् वाङ्मये स्रोतसि निमज्य विद्वद्धिः रत्नानि उद्धृतानि। अत: किमपि न तत् उर्वरितं यद् एतेषां विदुषां समक्षे उपहारं प्रस्तौतुं पुरो भवेयम् इति एकोऽर्थः। सरस्वत्यां नद्यां सुष्ठुभि: धीवरै: सर्वा: शुक्तय: नि:सारिता:। अत्र 'सुधीवरैः' इति पदे शब्दपरिवर्तनाहसत्वं वर्तते यतोहि सुधीवरशब्दो नानार्थक:। अभिप्रायोऽयं वर्तते यत् 'सारस्वतसाम्राज्यं सरस्वतीनद्या: स्रोतवत् वर्तते' इति उपमाऽलङ्कारध्वनि: व्यज्यते।

इत्थं अस्मिन् अपि पद्ये वर्तते उपमालङ्कारध्वनि:-

**निर्मज्याशु सुधीवरैः प्रतिपदं सारस्वतोदन्वतः,**
**प्रोद्धृत्योपहृतैर्दिगन्तसुलभैः सत्सूक्तिमुक्ताभरैः।**
**सद्वर्णैः परिपूर्णकर्णहृदया भूमीभुजोऽमी ततः,**
**किं मेताननुरञ्जयिष्यति वचो वाचालकाचावली।।**
**मौलौ मन्दारदामभ्रमदलिपटलीकाकलीं श्रोणिबिम्बे,**
**कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमञ्जीरसि ( शि ) ञ्जाम्।**
**उत्सङ्गे कीरगीतं स्तनभुवि मसृणं वल्लकी पञ्चमं वा,**
**तत्काव्ये दत्तकर्णाः शिवशिव मनुते भारती भारमेव।।**

भ्रमर-काञ्चीकलाप-मञ्जुमञ्जीर-शुक- वल्लकीपञ्चममधुरध्वनितोऽपि मधुरतमं तव काव्यं इति व्यतिरेकालङ्कारध्वनि: व्यज्यते।

3. रसध्वनि:- **प्रारम्भः शुभकर्मणस्त्रिभुवनक्लेशाभिचारागमः,**
**कान्ताकर्षणकर्मकार्मणविधिः कामाद्वितीयश्रुतिः।**
**हुंकारो मदनस्य निर्वृतिवधूमञ्जीरशिञ्जाध्वनिः,**
**श्रेयः सम्पदमातनोतु भवतः कंसारिवंशीरवः।।**

भगवान् श्रीकृष्ण: पाठकान् दर्शकान् वा प्रति श्रेय: सम्पदमातनोत्त इति भाव:। कविनिष्ठो भगवद्विषयकरतिभावोऽत्र व्यज्यते। यत्र भगवद्विषयकरतिभाव: भवति तत्र भावध्वनि: भवति। अतोऽत्र भावध्वनि:।

**वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवस्वः सृजन्ती,**
**नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि।**
**विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया,**
**मायापायादपायादविदितमहिमा कापि पैताम्बरी वः।।**

इत्यत्र कविनिष्ठो लक्ष्मीविषयकरतिभावः ध्वन्यते। तस्मादत्र भावध्वनिः।

मुञ्चाऽमुं चण्डिमानं मयि भुजगफणारत्नसङ्क्रान्तकायच्छायां प्रेक्ष्य स्वकीयामपि मनसि वृथा मा कृथा दुर्वितर्कम्।

**इत्युक्त्वा पादपद्मे सपदि निपततो मूर्ध्निगङ्गाधरस्य,**
**प्रेङ्खन्तश्चण्डिकायाः शतगुणितरुषः पान्तु वोऽपाङ्गभङ्गाः।।**

चण्डिकायाः अपाङ्गभङ्गाः सामाजिकान् रक्षन्तु इति भावः। चण्डिकाविषया कविनिष्ठा रतिरत्र व्यज्यते। अतः भावध्वनिः।

**त्वरयति नृपगोष्ठीसंस्तवख्यातिलिप्सा,**
**जडयति च विदग्धाराधनासाहसिक्यम्।**
**इति न समधिकर्तुं रूपकं नो विरन्तुं,**
**प्रभवति बत दोलारोहदुःस्थं मनो मे।।**

राजसभासंस्तवप्रसिद्धिलोलुपता त्वरयति, विद्वज्जनानां आराधनायाः साहसिक्यं जडयति च इति दोलारोहदुःरस्थं मम मनो भवति इति भावः। अतः संशयनामको व्यभिचारिभावो व्यज्यते। यत्र व्यभिचारिभावा अञ्जिताः भवन्ति तत्र भावध्वनिःभवति। अतोऽत्र भावध्वनिः वर्तते।

अस्मिन् नाटके रौद्रकरुणभयानकहास्यादयो रसा अङ्गरूपेण ध्वनिताः किन्तु प्रधानत्वेन वीर एव रसो वर्तते। तत्र वीररसस्यैकम् उदाहरणम्–

'किमात्थ रे! किमात्थ, कंसं मदविच्युतं कुरुते इति। ननु रे, नाद्यापि विदितस्ते त्रिभुवनैकवीरो निर्मिताशेषदुर्मदध्वान्त–ध्वंसः कंसः।

**यद्दोर्दीप्यत्प्रतापानलबहलवलज्ज्वालजालावलीढः,**
**शिश्ये शौरिः पयोधौ तुहिनगिरिदरीष्वन्धकारिर्निलिल्ये।**

बह्मा पद्मासनः सन्गमयति समयं तापसच्छद्मना त–

**द्रक्षोयक्षोरगाणामिह बत कतमो वीक्षितं मे क्षमेत।।**

इह 'विजेतव्य आलम्बनविभावः, आत्मश्लाघाऽनुभावः, गर्वादयो व्यभिचारिणः'

एभिः कंसस्योत्साहो ध्वन्यते।

इत्थं कंसवधनाटके ध्वनिविमर्शः प्रतिपादितः।

## सन्दर्भग्रन्थसूची


1. संस्कृत साहित्य का अभिनव इतिहास, डा. राधावल्लभ त्रिपाठी, विश्वविद्यालय प्रकाशन, वाराणसी
2. काव्यप्रकाशः
3. ध्वन्यालोकः
4. कंसवधनाटकम्
5. सूक्तिमुक्तावली, चौखम्बासंस्करणम्


## पादटिप्पणी

1. संस्कृत साहित्य का अभिनव इतिहास, डा. राधावल्लभ त्रिपाठी, विश्वविद्यालय प्रकाशन, वाराणसी, पृ.–475
2. सं. सु. स. पृ.–505
3. का.प्र., सू.–2 (वृत्तिभागः)
4. ध्वन्यालोकः–1.3
5. ध्वन्यालोकः, 1.2–5
6. कं. व.–1.31
7. कं. व.–1.42
8. कं. व.–1.17
9. कं. व.–1.21
10. कं. व.–1.1
11. कं. व.–1.2
12. कं. व.–1.3
13. कं. व.–1.15
14. कं. व.–1.31


*सहायकाचार्यः,*
*संस्कृतविभागः, कला-सङ्कायः, काशीहिन्दुविश्वविद्यालयः, वाराणसी*

ISSN 2582-2616

# कालिदासकाव्येषु पदनिरुक्तिः

डॉ. सरिता महेश्वरन

**आमुखम्**

आदिकविवाल्मीकेः महाभारतपुराणकर्तुर्महर्षेव्यासस्य च पश्चाद् कविरिति नाम्ना प्रथितःप्रथमःप्रतिष्ठितो भवति कविकुलगुरुः कालिदासः। केवलं आस्वादकस्य परमानन्दानुभवास्वादाय काव्यरचनां कृतवानयं कविः कस्मिन् काले कस्मिन् देशे जीवनमकरोदिति अद्यापि न सुविदितमेव। कवेः काव्याल्लब्धैरल्पैरंशैः तस्य कालगणनां कुर्वन्ति चरित्रकाराः आस्वादकाश्च।

सहृदयानां प्रतिभामनुसृत्य कालिदासकवितानामर्थतलाः विपरिणमन्ति। वाचामर्थानामनन्तसाध्यतां पश्यता कविना वागर्थप्रतिपत्तये जगत्पितरौ पार्वतीपरमेश्वरौ प्रणम्येते। वागर्थयोः परस्परनित्यसंबन्धः लोके सुविदितः खलु। सर्वासां वाचामर्थोऽस्ति, अर्थप्रतिपादनार्थं शब्दश्चावश्यकः। कालिदासकविना स्वस्य काव्येषु शब्दार्थयोः तुल्यप्राधान्यमङ्गीकृतमिति रघुवंशमहाकाव्ये मंगश्लोके 'वागर्थाविव' इत्यत्रप्रयुक्तेन द्वन्द्वसमासेन व्यक्तमेव । उभयपदार्थप्रधानः खलु द्वन्द्वः।

**वाग् द्वारमिव**

रघुवंशमहाकाव्ये वाग् द्वारमेवेति विशदयति कालिदासः। 'अथवा कृतवाग्द्वारे वंशेऽस्मिन् ' इति प्रथमसर्गे द्वितीयश्लोके प्रदिपादितं दृश्यते। कालिदासमते पूर्वसूरिणां काव्यप्रवेशनार्थं निर्मितं द्वारं भवति वाग्। तेन द्वारेण प्रविश्य आनन्दं विज्ञानञ्चानुभवितुं शक्यते इत्यर्थः। अमुमेवार्थं पुनःपरिष्करोति कविः रघुवंशमहाकाव्ये रघोः विद्याभ्यासवर्णनायाम्-

**स वृत्तचौलश्चलकाकपक्षगैरमात्यपुत्रैः सवयोभिरन्वितः।**
**लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशद्।**[1]

लिपिमभ्यस्य अक्षरद्वारेण ज्ञानं प्रति गच्छन् सः कुमारः नदी नदीमुखद्वारा समुद्रमिव ज्ञानसमुद्रं प्रापेति वर्णितः। श्लोकेऽस्मिन् उपमालङ्कारसान्निध्येन व्यङ्ग्यार्थः जाज्वल्यमानो दृश्यते। रघोः विद्यासमीपनमेव वर्णितं कविना। सवयोभिः सुहृद्भिरमात्यपुत्रैः स ज्ञानस्सम्पदं प्राविशदिति तात्पर्यम्। ज्ञानस्य' प्रकाशकत्वमस्तीति हेतोः कविः रघुवंशे कौत्सं वरतन्तुशिष्यं श्रुतप्रकाश इति वर्णयति।

**श्रुतप्रकाशं यशसा प्रकाशः प्रत्युज्जगामातिथिमातिथेयः।।**[2]

इति। वरतन्तुशिष्यः कौत्सः रघोः सकाशं गुरुदक्षिणार्थमागतः। श्रूयते इति श्रुतं वेदशास्त्रादयः। तैः वेदशास्त्रैः सः प्रकाशते इत्यर्थः। कौत्सस्य विज्ञत्वमनेन व्यक्तम्।

शब्दः तन्निष्ठोऽर्थश्च सुप्रसिद्धौ। तथापि कविना रघुवंशमहाकाव्ये प्रथमश्लोके वागर्थाविति वर्णितौ। तत्रापि व्यङ्ग्यार्थमस्ति। शब्दार्थैवित्यत्र शब्दः इति पदस्य कः अर्थः इति अर्थस्य नियतिर्नास्ति। अर्थाद् यन्त्रपटहादीनामपि शब्दः लोके प्रसिद्ध एव। अतः शब्दः इति कविना न प्रयुक्तम्। परन्तु वागित्येव। सा तु नियतार्थयुक्ता भवति। वाच्यार्थयुक्तः शब्दः भवति वाग्। एवं वागर्थपदद्वयेन अलङ्कारशास्त्रे विनिहितवाच-कलाक्षणिकव्यञ्जकशब्दाः तदर्थाः यथाक्रमं वाच्यलक्ष्यव्यङ्ग्यार्थाश्चोपलभ्यन्ते। मंगलश्लोके वर्णितोऽयं सङ्कल्पः सीतारामयोः विवाहसमये च कल्पितः दृश्यते, प्रत्ययप्रकृतियोगसन्निभः[3] इति पदेन। जनककन्यकानां राघवानां च समागमः प्रत्ययानां प्रकृतीनां समागम इव आभातीति कविः। प्रकृतिप्रत्ययानां योगेनार्थकल्पना संपूर्णा भविष्यतीति व्यक्तमेव। तद्वत् राघवानां जानकीनां च समागमेन तेषां जीवनसंपूर्तिर्भविष्यतीति भावः।

**वाचां निरुक्तिः**

कालिदासकाव्यानि पदसंपद्समृद्धानि भवन्ति। तत्र कविः बहूनां पदानां निरुक्तिं सूचयितुं यतते। कालिदासेन यदभिमतमस्ति तस्यार्थस्य प्रकाशनं कविना काव्यांशेनैव कुर्वत इति कालिदासकाव्यानां कवेश्च सविशेषता भवति। कविनोक्ता निष्पत्तिस्तु शास्त्रप्रसिद्धा वा ना वेति वक्तुं न शक्यते। किन्तु कविना यः शब्दः स्वकाव्ये प्रथमतया प्रयुज्यते तस्य कोऽर्थः युक्तः, कवेरभिमतः तस्मिन्नेव काव्यांशे तद्विशदीकरोतिकविः।

**मालविकाग्निमित्रस्य प्रथमाङ्कश्लोकः एवं भवति।**
**पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्।**
**सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः।।**[4] इति।

मूढपदस्य निरुक्तिरत्र कविना प्रोक्ता। यः परप्रत्यनेयबुद्धिः सः मूढः भवतीति कविः वदति। अन्येषां वाचं विवेकरहितः सन् यः स्वांशीकरोति स मूढ इत्यर्थः। परेषां प्रत्ययनेन नेया बुद्धिः येषां ते इति तस्य विग्रहः। मूढ इति पदस्य पर्यायाणि 'अज्ञे मूढयथाजातमूर्खवैधेय-बालिशाः' इति कोशे उक्तम्।[5] केवलमज्ञानुद्दिश्य स्वीकृतमिदं मूढपदं पुनः कविना परप्रत्ययनेयबुद्धिरिति वर्णितं मालविकाग्निमित्रे। के भवन्ति सन्तः के मूढाः भवन्तीति कविनैव स्वकाव्येषु विशदीकृताः। तस्मिन्नेव श्लोके विद्यमानं सन्तः इति पदं कविना रघुवंशे एवं निष्पद्यते-सदसद्व्यक्तिहेतवः[6] इति। रघुवंशमहाकाव्यं उत्तमं वेति सन्तः वक्तुमर्हन्ति। सन्त इत्यस्य न केवलं सज्जनाः किन्तु गुणदोषयोव्यक्तिहेतव इति अर्थः स्वीक्रियते इति तात्पर्यम्।

**नाम्नामन्वर्थता**

क्षत्रिय इति पदस्य अन्वर्थतामेवं वक्ति कविः-क्षतात् किल त्रायत इत्युग्रः क्षत्रस्य शब्दो भुवनेषु रूढः[7] इति। रघुवंशे वसिष्ठमुनेः धेनुं नन्दिनीं वने चारयितुं गच्छन् राजा दिलीपः गुहायां कस्यचन सिंहस्य मुखे पतितः। सिंहस्तु भगवतः परमेश्वरस्य किंकरः कुंभोदरो नामकः। सः धेनुं भक्षितुमुद्यतः। राजा तु तन्निवारणार्थं सचापधरः सन्नद्धोऽभवत्। धेनुस्तु सिंहस्य हस्ते चासीत्। तदा स्वशरीरं त्यक्त्वा तन्निवारणार्थं धेनुं क्षतात् त्रातुमुद्युक्तं राजानमुद्दिश्य कविः वदति अयं क्षत्रियः, क्षतात् सर्वान् सः त्रायते इति। अत्र दिलीपस्य क्षत्रियकुलोद्भूतत्वादन्वर्थसंज्ञा भवति।

अस्मिन्नेव काव्ये दिलीपस्य पुत्रस्य रघु इति नाम कथमागतमिति रघुपदस्य निष्पत्तिं च कविरेवं वर्णयति-

**श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः।**
**अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम्।**[8]

वेदानामन्तं प्रति गच्छतीति वा परान् युधि अन्तकं प्रति नयति इति वा कारणेन दिलीपः स्वपुत्रं रघुरिति ननाम। रघोः पुत्र अजस्तु तन्नाम एवमुपलब्धम्।

**ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम्।**
**अतः पिता ब्रह्मण एव नाम्ना तमर्घ्यजन्मानमजं चकार।।**[9]

इति।

**ब्रह्मणः मुहूर्ते जात इति कारणेन सः अज इति विज्ञातः।**
**राम इत्यभिरामेण वपुषा तस्य चोदितः।**
**नामधेयंगुरुश्चक्रे जगत्प्रथममङ्गलम्।।**[10]

रामः शरीरसौकुमार्येण सर्वानानन्दयन्नासीत्। रूपविशिष्टस्य कुमारस्य दशरथः राम इति नाम चकार। कविः राम इति पदस्य निष्पत्तिमभिव्यनक्ति, अयं सर्वान् जनान् वपुस्सुषमया अभिरमयति इति। अनन्तरं लवकुशादीनां नामकरणे रघुवंशे कविरेवं वदति-

**स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया।**
**कविः कुशलवावेव चकार किल नामतः।**[11]

रामेण परित्यक्ता सीता पूर्णगर्भिण्यासीत्। तस्याः रोदनं कुशेध्मा-हरणाय यातो वाल्मीकिमुनिः शुश्राव। अथ सः सीतामाश्रमपदं निनाय। काले गते कुशलवौ वाल्मीक्याश्रम एव जनिमलभताम्। महारण्ये संभूतः प्रसव इति हेतोः आरण्यसंभूतैरेव वस्तुभिः वाल्मीकिप्रभृतिभिः जननीपुत्राणां शुश्रूषा कृता। कुशानामानं तृणं, लवं-गोपुच्छाग्ररोमं चोपयुज्य तयोः बालकयोः गर्भक्लेदं प्रमाष्ट्रीदिति हेतोः यमलौ तौ कुशलवाविति प्रथिताविति कालिदासस्य मतम्।

हिमवतः पर्वतस्य पुत्री पार्वती इति तत्र न संशयः। अनन्तरं परमशिवप्रीत्यर्थं तपश्चर्यां कर्तुं गच्छन्तीं तां माता रुरोध। उ मा इति पदद्वयस्य मा गच्छतु बाले इत्यर्थः। किन्तु तयोस्संगमेन उमेति नाम तस्याः संजाता। पित्रोर्विप्रकृतयोरपि परमशिवप्रीत्यर्थं गौरीशिखरं प्राप्य तपोवृत्तिनिरता पार्वती पश्चाद् अपर्णेति विश्रुताभवत्। तस्य कारणं कविर्वदति-

**स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः।**
**तदप्यपाकीर्णमतः प्रियंवदा वदन्त्यपर्णेति च तां पुराविदः।।**[12]

इति। तपसः परमकाष्ठायां स्वयं विशीर्णपर्णानपि परित्यक्तवती पार्वती अपर्णेति प्रथामलभतेति कालिदासः कुमारसंभवे प्रत्यपादयत्।

दिलीपस्य महिषी सुदक्षिणा आसीत् । कविनैवमुक्तम्–

**तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा।**

**पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा।।**[13]

सुदक्षिणायाः कथं तन्नाम लब्धमिति अत्र विशदयति कविः। सा दयावत्यासीत्। दाक्षिण्यारूढवत्यासीत्। अतः तन्नाम सार्थकमासीत्। रामस्य सोदरः शत्रुघ्नः शत्रुघाता आसीत्। तस्य नाम्नः अन्वर्थतां वदति

**आदिदेशादथ शत्रुघ्नं तेषां क्षेमाय राघवः।**

**करिष्यन्निव नामास्य यथार्थमरिनिग्रहात्।।**[14]

शत्रून् घ्नन्तीति शत्रुघ्नः इति तन्नाम लवणासुरवधावसरे एव अन्वर्थतां प्राप। ततः पर्यन्तं रामस्यैव विक्रमं सर्वत्र प्रख्यातमस्ति। किन्त्वत्र शत्रुघ्नस्य पराक्रमशीलं व्यक्तमेवाबभाषे। रघुवंशराजेष्वन्तिमः अग्निवर्णः अग्निसमानतेजस्वी आसीत्। अतः तस्य नाम अग्निवर्ण इत्यासीत्। विवाहमुहूर्ते इन्दुमती सुनन्दया प्रतीहार्या साकं नृपाणां समीपमागता। सुनन्दा आगतानां राज्ञां कुलं राज्यं सविशेषताः इत्यादीनुपवर्णयत्। मगधराजमभिमुखीकृत्य तया उक्तं– सः परन्तपो नाम यथार्थनाम[15] इति। परान् शत्रून् सः सदा तापयतीति हेतुना तस्य नामापि अन्वर्थमिति विवक्षा।

**प्रजारञ्जनसमर्थः केवलं राजा भवति।**

**तदुक्तं रघुवंशे षष्ठसर्गे राजा प्रजारञ्जनलब्धवर्णः**[16] इति।

अलकापुरीं प्रति गमनवेलायां मेघः मध्येमार्गं अवन्तिराज्यं प्राप्नोति। तस्य राजधान्यासीत् विशाला नगरी। श्रिया विशालेति हेतोः तस्य तन्नाम लब्धमिति कविः वदति। यथा

**प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्**

**पूर्वोद्दिष्टामुपसर पुरीं श्रीविशालां विशालाम्।**[17]

तन् विस्तारे करणे इति धातोः तनयपदस्योत्पत्तिः। वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे[18] इत्युक्तं कविना रघुवंशे। दिलीपः कुलतन्तुं वंशप्रद्योतकरं पुत्रं वाञ्छति। पुत्रस्य वैशिष्ट्यं त द्वारा वंशपरम्पराप्राप्तिरप्यत्रोद्दिष्टमस्ति। तेन पुत्रेणैव स वंशः रघुवंश इति विश्रुतः। अतः तनयपदस्य अन्वर्थता प्राप्तेति विवक्षा। अनन्तकीर्तिरित्यस्य स्थिरकीर्तिरिति मल्लीनाथः सञ्जीवन्यां विशदयति। इन्दुप्रभायुक्ता भवति इन्दुमतीति अजस्य विवाहवेलायां कविः वदति। तस्मिन् समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुवतीमवेक्ष्य।[19] रघुवंशस्य द्वादशसर्गे कविः शूर्पणखामेवं वर्णयति।

**रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत।**

**सा वक्रनखधारिण्या वेणुकर्कशपर्वया।**

अङ्कुशाकारयाङ्गुल्या तावतर्जयदम्बरे ।[20] इति।। तस्या कर्कशानि नखानि शूर्पाणीव विस्तृतान्यासन्। अतः तस्याः तन्नाम लब्धम्। शूर्पसदृशनखयुक्तायाः राक्षस्याः अङ्गुल्यः अङ्कुशानीव भयङ्कराश्चावर्तन्तमित्यर्थः। विक्रमोर्वशीयस्य नायिका उर्वशी नारायणस्य ऊरूद्भवेति नाटके एव विशदयति कविः। अस्याः सर्गविधौ वेदाभ्यासजडः सः मुनिः कथं प्रभवतीति आश्चर्यं प्रकटयति राजा पूरूरवः। तमसा नाम नदी तमोपहन्त्री भवति। तमोपहन्त्रीं तमसां वगाह्य इत्युक्त्वा कविः तद्प्रकटीकरोति। रघुवंशस्य अष्टादशसर्गे तद्वंशीयानां बहूनां राज्ञां नामानि तेषामन्वर्थता च वर्णिता दृश्यते।

**नाम्नामयथार्थता**

वर्णितविषयानां नाम्नः स्वभावस्य च बन्धो नास्तीति चेद् कालिदासः तद् पृथक् विशदयति। रघुवंशमहाकाव्ये वदति नाम्ना सुतीक्ष्णश्चरितेन दान्तः इति। वाचंयमी कश्चन मुनिवरः तापसः आसीत् सुतीक्ष्णः। तस्य नाम एवतीक्ष्णतया भाति। अतः कविः वदति–तस्य नाम्नि केवलं सुतीक्ष्णता न तु प्रवृत्ताविति[21]। उन्नाभो नाम राजा अस्ति रघुवंशमहाकाव्ये। सः अथार्थनामा आसीदिति कविरेव वदति।

**उन्नाभ इत्युन्नतनामधेयस्तस्यायथार्थं नतनाभिरन्ध्रः।**[22]

ISSN 2582-2616

इति। तस्य नाभेः औन्नत्यं नासीदिति तात्पर्यम्। तस्य नामधेय एव औन्नत्यमासीदिति श्लोकः।

मनुदिलीपप्रभृतिराजानां नामानां निरुक्तिः प्रथमदृष्ट्या निर्मातुं न शक्नोत्यपि कविः वक्रमार्गेण तेषां निरुक्तिं कल्पयति। कुले माननीयः मान्यो मनीषी वा भवति मनुः।

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।[23] कुले सः प्रणवश्छन्दसामिव आसीत्-अर्थात् वेदवाङ्मयोच्चारणाद् पूर्वं यथा प्रणवः-ॐकारः प्रथमतया उच्यते तद्वत् मनुः सूर्यवंशस्य प्रथमगणनीय एव इत्यर्थः। सूर्यवंशस्य इक्ष्वाकुवंशस्य कुलगुरुर्भवति वसिष्ठः। प्रस्थापयामास वशी वसिष्ठः इत्युक्त्वा वसिष्ठस्य स्वभावमवदत् कविः। सूर्यवंशनृपतीनामाद्यं वर्णनीयो राजा खलु दिलीपः। तस्य तन्नाम कथं लब्धं तस्य को वार्थः इति न सुव्यक्तः। तथाऽपि कालिदासः वदति स-कुलदीप इति। कुलदीपपदात् दिलीपपदस्योत्पत्तिरिति सूचयितुमेव वा कविनेवं उक्तमिति चिन्तयति।

कालिदासस्य काव्यानि सूक्ष्मेक्षिकया पठति चेद् निरुक्तप्रयोगस्य सविशेषताः बहुत्र द्रष्टुं शक्यन्ते। कालिदासमहाकवेः पदविन्यासपटुत्वं अर्थव्यक्तिसामर्थ्यञ्च स्पष्टतया अत्र शोभते। कतिपयोदाहरणानि दत्तान्यस्मिन् प्रबन्धे। इतोऽप्यधिकं रघुवंशमहाकाव्ये वर्णितम्। काव्येषु सावधानो प्रतिभावानास्वादकः तत्सर्वं प्रतिभया आस्वादयितुं शक्यते।

## सूचिका:

1. रघुवंशः- 3-28
2. तत्रैव 5-2
3. सोऽभवद्वरवधूसमागमः प्रत्ययप्रकृतियोगसन्निभः।। रघुवंशः-11-56
4. मालविकाग्निमित्रम्-1-2
5. अमरकोशः- 3-48
6. तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः। रघुवंशः- 1-10
7. रघुवंशः-2-53
8. तत्रैव-3-21
9. रघुवंशः- 4-31
10. तत्रैव-10-57
11. तत्रैव 15-32
12. कुमारसंभवः- 5-28
13. रघुवंशः- 1-12
14. रघुवंशः- 15-6
15. तत्रैव 6-21
16. तत्रैव 6-21
17. पूर्वमेघदूतम्-30
18. रघुवंशः-2-64
19. तत्रैव 6-69
20. तत्रैव 12-38
21. तत्रैव 13-41
22. तत्रैव-18-20
23. तत्रैव 1-11

## ग्रन्थसूची


1. कालिदासग्रन्थावली, रेवाप्रसाद द्विवेदी, काशी हिन्दुविश्वविद्यालयः, वाराणसी, 1976
2. India in Kalidasa, Bhagavat saran Upadhyaya Kitabistan Allehabad, 1947
3. Kalidasa , Sri Aurabindo, Aryasahityabhavan, Culcutta, 1929
4. Kalidasa Citations, N R Subbanna, Meharchand Lachmandas, Delhi 1972
5. Kalidaasa His Period Personality and Poetry, K S Ramaswami Sastri, Madras, 1933
6. Similies of Kalidasa (उपमा कालिदासस्य), K Chellappan Pillai, Vidyabharati Series, Culcutta,

ISSN 2582-2616

# काव्यात्मतत्वविमर्शः

**डॉ. सत्यनारायणः**

साहित्यशास्त्रं काव्यस्य जीवनाधायकतत्वविषये अनेकविधं चर्चयति। तत्र शब्दार्थौ काव्यस्य शरीरमिति प्रतिपादयता आचार्यैः काव्यपुरुषस्य विचारसारं प्रकटय्य तस्यात्मतत्वविषयेऽपि इत्थं क्रमेण विचाराः प्रकटितास्सन्ति। साम्प्रतं साहित्यशास्त्रमिति यदुच्यते, तस्यैव अलङ्कारशास्त्रमिति अपरं नाम वर्तते। संस्कृतशास्त्रेष्वलङ्कारशास्त्रस्य महत्त्वपूर्णं स्थानं वर्तते। काले काले अस्य शास्त्रस्य विभिन्ननामानि प्रचलितानि। तत्रादौ क्रियाकल्पः क्रियाविधिर्वा। रामायणे क्रियाकल्पशब्दस्य उल्लेखो वर्तते। तद्यथा–

**क्रियाकल्पविदश्चैव काव्यविदोजनान्।** इति।

ललितविस्तरनामके बौद्धग्रन्थे क्रियाकल्पाख्यायाः शास्त्रविद्यायाः उल्लेखः कृतः। तत्र क्रियाकल्पशब्दस्य व्याख्यां कुर्वता जयमङ्गलाटीकाकारेण लिखितम्–'क्रियाकल्प इति काव्यकरणविधिः काव्यालङ्कारः इत्यर्थः।' दण्डिना काव्यादर्शे क्रियाविधिसंज्ञा प्रयुक्ता–

**वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्।**

अलङ्कारशास्त्रमिति नाम अतिशयेन प्रचलितः प्रसिद्धः च वर्तते। भामहवामनादिभिः स्वस्वग्रन्थानां नामकरणे अलङ्कारः इति नाम स्वीकृतः। तदानीन्तने काले अलङ्कारतत्त्वस्यप्राधान्यात् महत्त्वाद् चेदं शास्त्रं अलङ्कारशास्त्रमिति नाम प्राप्तवत्। इदमेव नाम अधुनापि प्रचाल्यमानो वर्तते। तथा इदमेव नाम प्राचीनतमः सर्वाधिकप्रसिद्धः च अस्ति। एतन्नामसमर्थनसन्दर्भे उक्तं च काव्यालङ्कारसूत्रवृत्तेः कामधेनुटीकाकारेण—

**''योऽयमलङ्कारः काव्याग्रहणहेतुत्त्वेन उपन्यस्यते तद्व्युत्पादकत्वाच्छास्त्रमपि अलङ्कारनामा''॥**

अलङ्कारशास्त्रे काव्यसमीक्षाविषयकतत्त्वानां विवेचनं भवति। तदुक्तं संस्कृतसाहित्येतिहासे विश्वनाथभारद्वाजेन—'काव्यानां लक्षण-भेद-दोष-गुणालङ्काररसादीनां यत्र विचारः प्रस्तूयते तदलङ्कारशास्त्रम्'। इति।

**अलङ्कारशब्दार्थः**

अलङ्कारशब्दस्य अर्थः 'भूषणम्' मन्यते। येन अङ्गिनः तथा तेन अङ्ग्याः शोभावृद्धिः भवति, सोऽलङ्कारः कथ्यते। अलङ्कारस्य लौकिकप्रयोगविषये यावत् प्रसिद्धिरस्ति, तावत् शास्त्रीयप्रयोगविषयेऽपि प्रवर्त्तते। येन प्रकारेण शरीरशोभावर्धनेन शारीरिकशोभानां वर्धकाः हारादयः अलङ्काराः कथ्यन्ते, तथैव शब्दार्थस्वरूपस्य शरीरशोभावर्धनेन रसरूपं शारीरिकीं शोभां वर्धमाना उपमादयः अलङ्काराः कथ्यन्ते। आचार्यैः स्वीकृतं लक्षणं यथा—

**''हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः।**
**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते॥''**

यद्यपि अलङ्काराणां महत्त्वं काव्यात्मरूपेण नास्ति, तथापि शब्दार्थरूपी काव्यस्य बाह्यसौन्दर्यवर्धने अलङ्काराणां महत्त्वमस्ति। अलङ्काराणां महत्त्वं तादृशं वर्तते यथा मानवशरीरे वस्त्रादीनां च। यथा सर्वगुणसम्पन्नः निर्वसनो मानवः न शोभते एवं अलङ्काररहिता नारी न शोभते तथैव अलङ्कारैः विना काव्यम्। यथोक्तम् अग्निपुराणे–'अलङ्काररहिता विधवैव सरस्वती'॥ इति॥

अलङ्कारलक्षणं यथा—'काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते'। इति। तथा—'सौन्दर्यमलङ्कारः'। इति च काव्यालङ्कारसूत्रे आचार्यवामनेनोक्तम्। अनेन ज्ञायते यत् काव्यस्य ये घटकाः शोभां वर्धयन्ते ते अलङ्काराः इति। यथा वदति साहित्यदर्पणे विश्वनाथः—

**''शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गादिवत्''॥**

ये शब्दार्थयोः शोभावर्धकाः, रसादीनां चोपकर्त्तारः अलङ्काराः। यथा आचार्यमम्मटो लक्षयति यथा—

**''उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥** इति।

अलङ्काराणां महत्त्वविषये उक्तं काव्याऽलङ्कारसूत्रे—

**'तदतिशयहेतवस्त्वलङ्काराः'॥** इति।

अर्थात् अलङ्कारास्तु काव्यस्य अतिशयसम्पादनसाधनाः भवन्ति।

ISSN 2582-2616

**अलङ्कारशास्त्रस्य सम्प्रदायाः**

प्रथमो हि काव्यशास्त्रस्य सम्प्रदायो रससम्प्रदायो वर्तते। अस्य सम्प्रदायस्यानुयायिनः काव्ये रसस्यैव प्राधान्यं स्वीकृतवन्तः। राजशेखरमतानुसारेण रससम्प्रदायस्य प्रवर्तको नन्दिकेश्वरो वर्तते। किन्तु साम्प्रतं नन्दिकेश्वरकृतस्य कस्यचनापि ग्रन्थस्य समुपलब्धिर्न भवति; अत एव साम्प्रतं यस्य रससम्प्रदायस्य चर्चा क्रियते परवर्तिभिः काव्यसमालोचकैः तस्य रससम्प्रदायस्य प्रवर्तकः भरतमुनिः वर्तते। स एव नाट्यशास्त्रनामकस्य ग्रन्थस्य प्रणेता वर्तते। स मुनिः नाट्यशास्त्रस्य षष्ठेऽध्याये आह—"**विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः।**" इति। इदमेव रससूत्रमाश्रित्य परवर्तिनः आचार्याः रससिद्धान्तस्य व्याख्यां कृतवन्तः। इमे रससम्प्रदायानुयायिनः रसमेव काव्यात्मरूपेण स्वीकृतवन्तः।

काव्यशास्त्रस्य द्वितीयसम्प्रदायोऽस्त्यलङ्कारसम्प्रदायः। अस्य समर्थकाः भामहादिकाः अलङ्कारस्यैव काव्यात्मत्वं प्रतिपादितवन्तः। यद्यपि अलङ्कारसम्प्रदायस्य प्रवर्तको भामहः—शब्दार्थौ काव्यमिति आह। काव्यलक्षणं परन्तु भामहस्य व्याख्याकाराः आहुः यत् भामहस्योक्तेः केवलं अयमेवाभिप्रायो नास्ति यत् शब्दार्थयोः साहित्यमेव काव्यं भवति, अपितु शब्दार्थयोः चारुत्वस्य हेतवः शब्दालङ्काराः अर्थालङ्काराश्च सन्ति। तैरलङ्कारैः विशिष्टावेव शब्दार्थौ काव्यपदेनाभिधीयेते।

काव्यशास्त्रस्य तृतीयः सम्प्रदायो रीतिसम्प्रदायो वर्तते। एतस्य सम्प्रदायस्य प्रवर्तकः आचार्यो वामनो वर्तते काव्यालङ्कारसूत्रस्य प्रणेता। तेन तु स्पष्टतया रीतेरात्मत्वमुदघोषयता उक्तम्- रीतिरात्मा काव्यस्येति । इति।

काव्यशास्त्रस्य चतुर्थो सम्प्रदायो वर्तते ध्वनिसम्प्रदायः। अस्य प्रवर्तकः आनन्दवर्धनो विद्यते। तेन ध्वनेरेव काव्यात्मत्वमुक्तम्। ध्वन्यालोके तेन कथितं यत्—काव्यस्यात्मा ध्वनिरिति। इति।

काव्यशास्त्रे पञ्चमस्य सम्प्रदायस्य नाम वर्तते वक्रोक्तिसम्प्रदायः। अस्य सम्प्रदायस्य प्रवर्तकः वक्रोक्तिजीवितकारः आचार्यकुन्तको वर्तते। तेनोक्तम्—वक्रोक्तिः काव्यस्य जीवितम्। इति। वक्रोक्तेः स्वरूपं निरूपणसमये तेन गदितम् यत्—

**उभावप्येतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥** इति।

औचित्यनामकोऽयं काव्यशास्त्रस्य षष्ठो सम्प्रदायो वर्तते। अस्य प्रवर्तकः लोचनकारस्य शिष्यः क्षेमेन्द्रोऽस्ति। स औचित्यविचारचर्चानामकं ग्रन्थं लिलेख। औचित्यस्य स्वरूपं तेन निरूपितम्। तद्यथा—

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावः तदौचित्यं प्रचक्षते॥** इति।

यस्य येन साकं साम्यं भवति तदेव तस्योचितमिति कथ्यते। उचितस्य भाव एवौचित्यमिति कथ्यते। इदमौचित्यमेव काव्यस्यजीवितं भवति। तेनैव काव्ये चमत्कार उत्पद्यते।

**काव्येषु रसानां महत्त्वम्**

भारतीयसौन्दर्यशास्त्रस्य मूलाधारः अस्ति काव्यशास्त्रम्। यद्यपि दर्शनेऽपि विशेषकरः आनन्दवादिनः आगमग्रन्थेषु, आत्मतत्त्वस्य व्याख्यानस्यान्तर्गते सौन्दर्यस्यानुभूतेः विषये प्रचुरोल्लेखाः प्राप्यन्ते, तथापि सौन्दर्यस्य आस्वादस्य स्वरूपस्य च व्यवस्थितविवेचनं काव्यशास्त्रे एव लभते। मनोविज्ञानदृष्ट्या सौन्दर्यचेतना एका मिश्रवृत्तिः वर्त्तते। एतस्याः योजकतत्त्वानि सन्ति- (1) प्रीतिः अर्थात् आनन्दः (2) विस्मयः।

भारतीयकाव्यशास्त्रं आरम्भतः अवगतमासीत्। तस्य द्वौ प्रतिनिधिसिद्धान्तौ रसालङ्कारौ क्रमशः प्रीतिविस्मययोः एव शास्त्रीयो विकासः अस्ति। सौन्दर्यस्यास्वादे निहितप्रीतितत्त्वस्य प्राधान्यं रससिद्धान्ते प्रस्फुटितः विकसितः च अभवत्, तथा तत्र विस्मयतत्त्वस्य प्रमुखता वक्रता, अतिशयादिभिः माध्यमेन अलङ्कारवादस्य रूपं ध्रियते। एतयोः रससिद्धान्तः केवलं कालक्रमदृष्ट्या एव न अपितु प्रभावप्रसारदृष्ट्या च अधिकमहत्त्वपूर्णः अस्ति। रस एव भारतीयकाव्यशास्त्रस्य आधारशिला अस्ति।

रसः काव्यस्य अन्यतमेव न, परमं महनीयं तत्त्वमस्ति। भारतीयसाहित्यशास्त्रस्य ऐतिहासिकदृष्ट्या पर्यवेक्षणेन ज्ञायते यत्साहित्यशास्त्रीयेषु ग्रन्थेषु रसस्य विवेचनतत्त्वम्, सिद्धान्तः एवं प्रस्थानं रूपत्रये उपलभ्यन्ते। दोषगुण-रीतिवृत्तिप्रवृत्त्यादयः रसोऽपि काव्यस्य तत्त्वमस्ति, एतस्योल्लेखः रामायणे महाभारते साक्षात् अभवत्, वैदिकसंहितास्वपि प्रकारान्तरेण एतस्य निरूपणमभवत्। इत्थं काव्यस्यात्मतत्वाधायकतत्त्वे रसस्यैतिहासिकी

संवेदेनैव प्रारभ्यते। एवं प्रकारेण अलङ्कारशास्त्रं काव्याङ्गं भवति, अत एव साहित्यदर्पणकार: स्वग्रन्थे लिखति—'अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वम्' काव्यस्य फलमपि ते एवं कथ्यन्ते—

**''चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**

**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥''** इति।

**रीतिसम्प्रदाय:**

कालक्रमेण अलङ्कारसम्प्रदायस्यानन्तरं काव्यशास्त्रेतिहासे रीतिसम्प्रदायस्य काल: समागत:। अस्य सम्प्रदायस्य प्रवर्तक आचार्यो वामन: अस्ति। यद्यपि काव्यदर्शनस्य प्रणेता आचार्यो दण्ड्यपि रीते: विस्तृतं विवेचनमकरोत्, किन्तु स: रीतिं काव्यस्य आत्मेति न प्राह। वामन एव स्वकीये काव्यालङ्कारसूत्रग्रन्थे रीते: काव्यात्मत्वं प्रतिपादयमास। स: प्राह–रीतिरात्मा काव्यस्य इति।

अत्रायं प्रश्न उदेति यत्— वामनो यस्या: रीते: काव्यात्मत्वं स्वीकरोति तस्या: स्वरूपं किम्? अस्य प्रश्नोत्तररूपेण वामन: प्राह— विशिष्टा पदरचना रीतिरिति वैशिष्ट्यं विशिष्टानां पदानां रचनैव रीतिशब्देनाभिधीते इत्यर्थ:। एतस्यामवस्थायां पुनरपि प्रश्नो भवति यत् अत्राभिधीयमानस्य वैशिष्ट्यस्य स्वरूपं किमिति। तत्र प्राह वामनो— विशेषो गुणात्मा इति। पदरचनायां काव्यस्य जीवनतत्त्वस्वरूपाया रीतेराधायका: गुणा एव सन्ति। अत एव गुणा एवात्र विशेषशब्देन विवक्षितास्सन्ति।

**औचित्यसम्प्रदायस्य परिचय:**

काव्यशास्त्रस्य सम्प्रदायेष्वौचित्यसम्प्रदायस्य षष्ठं स्थानं वर्तते। अस्य सम्प्रदायस्य प्रवर्तक आचार्य: क्षेमेन्द्रो वर्तते। अयमाचार्योऽभिनवगुप्ताचार्यस्य शिष्य आसीत्। अयमाचार्य: प्रतिपादयामास यदौचित्यमेव काव्यस्य जीवितमास्ते। औचितस्य स्वरूपं निरूपयताऽनेनाभिहितम्—

**उचितं प्राहुराचार्या: सदृशं किल यस्य यत्।**

**उचितस्य च योभावस्तदौचित्यं प्रचक्षते।।** इति।

इदमौचित्यमेव काव्यस्य जीवितं वर्तते इति प्राहाचार्य: क्षेमेन्द्र:। औचित्यमेव काव्ये चमत्कारस्याधानं करोति। अस्यौचित्यस्य निरूपणस्योपक्रमं कुर्वताऽनेनाभिहितम्—

**औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।**

**रसजीवितभूतस्य विचारं कुरुतेऽधुना।।** इति।

अस्यां कारिकायां स उद्घोषयामास यत् यस्य रसस्य काव्यात्मत्वं येन केनापि प्रकारेण सर्वैरालङ्कारिकै: स्वीक्रियते तस्य रसस्यापि जीवितमौचित्यतत्त्वमेव वर्तते। क्षेमेन्द्र औचित्यस्य बहूनां भेदानां प्रतिपादनमकार्षीत्। तद्यथा–पदौचित्यम्, अर्थौचित्यम्, वाक्यौचित्यम्, रसौचित्यम्, कारकौचित्यम्, लिङ्गौचित्यम्, वचनौचित्यमित्यादिकम्। औचित्यस्योदाहरणरूपेण स: निम्नाङ्कितं श्लोकमुपस्थापयामास—

**अपसारय घनसारं कुरु हारं दूर एव किं कमलै:।**

**अलमलमालिमृणालैरिति वदति दिवानिशं बाला।।** इति।

इदं विप्रलम्भस्योदाहरणमास्ते। अस्य श्लोकस्य पूर्वार्द्धे रकारस्यानुप्रासो विद्यते, उत्तरार्द्धे च लकारस्य। तच्चातीव सहृदयहृदयाह्लादकं वर्तते।

स्वयं ध्वनिसम्प्रदायस्य प्रवर्तक आचार्य आनन्दवर्धनोऽप्यभिधत्ते ध्वन्यालोके—

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।**

**औचित्योपनिबन्धस्तु रसस्योपनिषत् परा।।** इति।

**वक्रोक्तिसम्प्रदाय:**

काव्यशास्त्रस्येतिहासे वक्रोक्तिसम्प्रदायस्य स्थानं चतुर्थं विद्यते। अस्य सम्प्रदायस्य प्रवर्तक: आचार्य: कुन्तकोऽस्ति। स: वक्रोक्तेरेव काव्यात्मत्वं प्रतिपादयामास। तेनाभिहितम्—वक्रोक्ति: काव्यजीवितमिति।

ISSN 2582-2616

अयं वक्रोक्तिशब्दः संस्कृतसाहित्यस्यातिप्राचीनः शब्दो विद्यते। कवयः आचार्याश्चास्य प्रयोगं भिन्नेषु भिन्नष्वर्थेषु चक्रुः। अलङ्कारशास्त्रे वक्रोक्तिशब्दस्य प्रयोगः सामान्यजनापेक्षया भिन्नः चमत्काररूपेण कथनप्रकारार्थे क्रियते। काव्यशास्त्रस्य क्षेत्रे सर्वप्रथमं आचार्यो भामहः वक्रोक्तिशब्दस्य प्रयोगमकार्षीत्। तेन प्रतिपादितं यत् अतिशयोक्तेरपरं रूपमेव विद्यते वक्रोक्तिः। भामहो वक्रोक्तिं सर्वेषामलङ्काराणां मूलमाह। उक्तञ्चापि भामहेन—

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**

**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।** इति।

**अपरञ्चापि-**

**वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्प्यते।** इति ।

भामस्याभिप्रायानुसारेण वक्रोक्तिविहीनं वाक्यं काव्यं भवितुमेव नार्हति। वक्रोक्त्या रहितं वाक्यं वार्ता भवितुमर्हति। भामहो गतोऽस्तमर्कः इत्यादिकानि वाक्यानि वार्ताशब्देनाभिधत्ते।

**ध्वनिसम्प्रदायः**

काव्यशास्त्रस्यैतिह्ये ध्वनिसम्प्रदायस्येतिहास अतीव गौरवशाली वर्तते। एतद्व्यतिरिक्ताः काव्यशास्त्रस्य ये सम्प्रदायास्सन्ति, तेभ्यः सर्वेभ्य अधिकः प्रचारोऽस्यैव काव्यशास्त्रसम्प्रदायस्याऽभूत्। ध्वनिसम्प्रदायस्येवं विशिष्टता वर्तते यदयं काव्यास्यान्तः तत्त्वस्य विवेचनं करोति, किञ्च तत्रैव स्वपूर्ववर्तिभिरन्विष्टानां सर्वेषां काव्यतत्त्वानां समन्वयमपि सम्पादयति।

ध्वनिसम्प्रदायस्य प्रवर्तकः आचार्य आनन्दवर्धनो विद्यते। सः स्वकीये ध्वन्योलोकनाम्नि ग्रन्थे प्रतिपादयामास यत् ध्वनिरेव काव्यास्यात्मा विद्यते। तथाहि—काव्यास्यात्मा ध्वनिरितिबुधैः यः समाम्नातपूर्वः।

इति हि ध्वन्यालोकस्यादिमायाः कारिकाया आदिमा पङ्क्तिः वर्तते ।

किञ्च येन प्रकारेण लोके ध्वनिसम्प्रदायस्य प्रचारोऽभूत् तेनैव प्रकारेण तस्य विरोधोऽपि संजायते स्म। कुन्तकप्रतिहारेन्दुराजभट्टनायकमहिमभट्टप्रभृतयः प्रख्याता विद्वांसोऽस्य सम्प्रदायस्य विरोधिनोऽभूवन्। किन्तु सत्स्वपि एतेषु समेषु विरोधिषु ध्वनिसम्प्रदाय अत्यधिकः विकासोऽभवत्।

ध्वनितत्त्वस्य स्वनिरूपणं कुर्वता आनन्दवर्धनाचार्येण प्रोक्तम्—

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**

**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।** इति।

**अस्याः कारिकाया वृत्तौ आचार्यः वक्ति—**

यत्रार्थो वाच्यविशेषो वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः स काव्यविशेषो ध्वनिरिति। अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त एव ध्वनेर्विषय इति दर्शितम्। इति।

ध्वन्यालोककारेणाभिहितं यत् मुख्यतयाऽर्थो हि द्विप्रकारको भवति, वाच्यः प्रतीयमानश्च। वाच्यार्थान्तर्गता एवं अलङ्कारादिका भवन्ति। प्रतीयमानार्थान्तर्गत एव ध्वनिः। अस्य प्रतीयमानस्यार्थस्य निरूपणं कुर्वन् आनन्दवर्धनाचार्यः प्राह—

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**

**यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।** इति।

अयमर्थो यत् येन प्रकारेण कस्याश्चन सुन्दर्याः अवयवेभ्यः पृथगेव तस्याः लावण्यं भाति तेनैव प्रकारेण काव्ये वाच्यार्थादिभ्यो व्यतिरिक्त एव भवति प्रतीयमानोऽर्थः। तच्चातीव चारुत्वं वहति। तस्यैवार्थस्यश्लाघां कुर्वन्ति सहृदयाः।

काव्यशास्त्रस्येतिहासे ध्वनितत्त्वस्य विवेचनं सर्वोत्कृष्टोपलब्धिरस्तीति नास्ति तिरोहितम्। यद्यपि वाल्मीकि-व्यास-कालिदासप्रभृतीनां महाकवीनां ग्रन्थेषु ध्वनितत्त्वस्यैव साम्राज्यं दृश्यते, किन्तु सर्वप्रथमम् आनन्दवर्धनाचार्य एव ध्वनेर्विवेचनं ध्वन्यालोके चकार। आनन्दवर्धनात् पूर्वं केनापि काव्यालोचकेन ध्वनितत्त्वस्य विवेचनं न कृतम्। आनन्दवर्धनाचार्यस्यानन्तरम् अभिनवगुप्तपादाचार्यः ध्वन्यालोकलोचन-नाम्न्याः व्याख्यायाः प्रणयनं कृत्वा ध्वनिसिद्धान्तं सुदृढं चकार। आनन्दवर्धनाचार्यस्य पश्चाद्वर्तिनः मम्मटविश्वनाथभोजराजप्रभृतयः काव्यप्रकाशसाहित्यदर्पणसरस्वती-कण्ठाभरणादिकानां ग्रन्थानां प्रणयनं कृत्वाध्वनि सिद्धान्तस्य समर्थं समर्थनं चक्रुः।

ध्वनिसिद्धान्तस्योपजीव्यं वैयाकरणानां स्फोटसिद्धान्तो वर्तते। तमेव सिद्धान्तमाश्रित्य ध्वनिसिद्धान्तस्य प्रवर्तनमभूत्। एतस्मादेव कारणात् ध्वनिवाद्याचार्यो मम्मटो ब्रूते—

बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः। ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य। इति।

**अलङ्कारसम्प्रदायः**

ऐतिह्यस्य निपुणनिभालने कृते सति उपर्यभिहितेषु षट्सु सम्प्रदायेष्वलङ्कारसम्प्रदायस्य द्वितीयसम्प्रदायत्वं भवति प्रतिपादितम्। अत एवास्य सम्प्रदायस्य किञ्चिद् विस्तरेण विवेचनं प्रस्तूयते।

अलङ्कारसम्प्रदायस्य प्रवर्तक आचार्यो भामहः भवति। अस्य सम्प्रदायस्याचार्येषु उद्भटस्य, रुद्रटस्य, प्रतिहारेन्दुराजस्य च नामानि प्रधानतां भजन्ते। अस्य दण्डिनः मतानुसारेण काव्यस्य पोषकाणां सर्वेषामेव तत्त्वानामलङ्कारशब्देन भवत्यभिधानम्। प्रतिहारेन्दुराजरुद्रटावपि स्वकीययोः काव्यालङ्कारग्रन्थयोः अलङ्कारस्यैव प्रधान्यं प्रतिपादयामासतुः। अस्य सम्प्रदायस्याचार्याणां मतानुसारेण तु अलङ्कार एव काव्यस्य जीवातुत्तत्वम्। तेनैवद्वारा काव्येषु काव्यत्वामायाति।

काव्यस्य स्वरूपनिरूपणावसरे आचार्यो मम्मटः काव्यप्रकाशे प्राह—तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति। अस्य काव्यलक्षणस्य अनलङ्कृती पुनः क्वापीत्यंशमादाय चन्द्रालोकनामकस्य लक्षणग्रन्थस्य प्रणेता पीयूषवर्षो जयदेवः प्राह—

**अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।**
**असौ न मन्यते कस्मादनुष्णमनलं कृती।।** इति।

अयमाशयो यत् यः काव्यशास्त्राभिज्ञो विद्वान् अलङ्काररहितयोरपि शब्दार्थयोः काव्यत्वं स्वीकरोति सः कस्मान्नहि मन्यत यत् अनलः अनुष्णोऽपि भवतीति। येन प्रकारेणानलस्य शीतलतासम्भविनी तेनैव प्रकारेण काव्ये अलङ्कारैः विरहिते काव्यत्वमसम्भवमेव। यतोऽलङ्कार एव काव्यत्वस्य प्रयोजकं तत्त्वम्।

अलङ्कारसम्प्रदायस्याचार्यो रुय्यकोऽपि स्वकीये अलङ्कारसर्वस्वनामके ग्रन्थे प्राह—

तदेवेहालङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम् इति प्रचीना आचार्याः भामहादिकाः काव्ये अलङ्कारस्यैव प्राधान्यं मन्यन्ते इत्यर्थः। यत्तु भामहेनाभिहितम्—

शब्दार्थौ सहितौ काव्यमिति तत्र भामहस्य शब्दार्थयोरेव साहित्ये अभिप्रायो नहि वर्तते, अपितु तस्याभिप्रायो विद्यते यत् शब्दार्थयोः चारुत्वप्रतिपादकाः शब्दालङ्कारा अर्थालङ्काराश्च ये सन्ति तैः विशिष्टावेव शब्दार्थौ काव्यशब्देनाभिधीयेते। एतस्मादेव कारणात् काव्यालङ्कारसर्वस्वग्रन्थस्य व्याख्याकारः समुद्रबन्धः प्राह—

**'इह विशिष्टौ शब्दार्थौ काव्यमिति।'**

अत्र हि विवक्षितस्य वैशिष्टस्य सीमाऽतीवव्यापकोऽस्त्यभिप्रायः। तेन काव्यस्य चारुत्वसम्पादकाः गुण-अलङ्कार-रीति-चमत्कारादिकाः सर्वे एव वैशिष्ट्यस्यान्तर्गताः।

अलङ्कारणमेतेषां विकासस्यैकः क्रमो विद्यते। भरतमुनिः स्वकीये नाट्यशास्त्रे चतुर्णामेवालङ्काराणां निरूपणमकरोत्। ते च सन्ति अनुप्रासः, उपमा, रूपकम्, दीपकञ्च। फलतः इमे एव चत्वार अलङ्कारमूलभूताः सन्ति। तत्र अनुप्रासाख्योऽलङ्कारः शब्दालङ्काराणामुपजीव्यं बभूव। अन्ये च त्रय अलङ्काराः अर्थालङ्काराणां मूलभूता अभूवन्। एतेभ्यश्चतुहर्भ्य एवालङ्कारेभ्यः विकसिता अलङ्कारणां संख्या अप्पयदीक्षितेन विरचिते कुवलयनन्दनामके ग्रन्थे 125 (पञ्चविंशत्युतरशतम्) बभूव।

एतेषामलङ्काराणां संख्यास्मृद्धिना साकं तेषां स्वरूपेऽपि परिवर्तनानि सञ्जातानि। अलङ्काराणां स्वरूपपरिवर्तनस्योदाहरणं वर्तते वक्रोक्त्यलङ्कारः।

आचार्यो भामहो वक्ति यत् सर्वेषामेवालङ्काराणां जीवनाधायकं तत्त्वं वक्रोक्त्यलङ्कार एव वर्तते। भामहानुसारेण कश्चनाप्येतादृश अलङ्कारो नास्ति यत्र वक्रोक्तेरनुप्रवेशो न स्यात्। सोऽभिधत्ते—

**सेयं सर्वत्रवक्रोक्तिरनयाऽर्थो विभाव्यते ।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।** इति।

वामनः वक्रोक्तेः परिगणनामर्थालङ्कारेषु करोति, किन्तु रुद्रटः वक्रोक्तेः शब्दालङ्कारेष्वेव गणनां करोति। अनेन प्रकारेण अलङ्कारसम्प्रदायस्याचार्याः तत्र तत्र स्वमौलिकतां प्रदर्शयामासुः।

इत्थं प्रकारेण काव्यस्य जीवनाधायकतत्वरूपेण काव्यशास्त्रजगति आचार्याणां विविधानि मतानि सन्ति। वस्तुतः काव्यं ग्राह्यमलङ्कारादित्येके, रीतिरात्मा काव्यस्येत्यपरे, काव्यस्यात्मा ध्वनिरित्यन्ये, वक्रोक्तिकाव्यजीवितमिति केचित्, औचित्यं काव्यजीवितमिति परे, केचिच्च वाक्यं रसात्मकं काव्यमित्युद्घोषयन्ति। यद्यप्यलङ्काररीतिवक्रोक्त्यो–चित्यादिभिस्सम्प्रदायैः काव्यस्यात्मत्वङ्गीकारः स्वसिद्धान्तैः परिपोषितोऽस्ति तथाऽपि ध्वनिसिद्धान्तः तत्परवर्तिभिराचार्यैः बहुधाऽङ्गीकृतः। तस्य च कारणं भाति ध्वनेः काव्यत्वप्रतिपादकत्वे रसध्वने काव्यस्य साररूपेणाङ्गीकारः। आचार्यानन्दवर्धनः ध्वन्यालोके उक्तप्रकारेण काव्यस्य समग्रमपि वस्तुजातं भेदप्रभेदसहितं सकललक्ष्यानुसारिलक्षणान्यभिहितानि सन्ति।

## पादटिप्पणी

1. वा. रामायणम् उ.का. 94/7
2. ध्वन्यालोकभूमिका पृष्ठ. 20
3. काव्यादर्शे 1/9
4. काव्यालङ्कारसूत्रवृत्तेः कामधेनुटीका
5. संस्कृतसाहित्येतिहासे विश्वनाथभारद्वाज पृ. 35
6. काव्यप्रकाशः अष्टमुल्लासे 67
7. काव्यादर्शः 2.1
8. अग्निपुराणे 345–2
9. काव्यादर्शः 2.1
10. वामन काव्यालङ्कारसूत्राणि
11. साहित्यदर्पणे
12. काव्यप्रकाशः अष्टमुल्लासे 67
13. काव्याऽलङ्कारसूत्रे
14. नाट्यशास्त्ररसाध्यायः
15. भामह काव्यालङ्कारः
16. वामन काव्यालङ्कारसूत्राणि
17. ध्वन्यालोकः1.1
18. वक्रोक्तिजीवितम्
19. वक्रोक्तिजीवितम् 1.10
20. औचित्यविचारचर्चा 7
21. डा–नगेन्द्र, रससिद्धान्त, पृष्ठ–2, प्रकाशकनेशनलपब्लिशिंगहाउस, नईदिल्ली।
22. साहित्यदर्पणः
23. साहित्यदर्पणः
24. वामन काव्यालङ्कारसूत्राणि
25. वामन काव्यालङ्कारसूत्राणि
26. औचित्य विचारचर्चा कारिका – 7
27. औचित्य विचारचर्चा कारिका – 8
28. ध्वन्यालोके
29. भामहकृत काव्यालङ्कार 2/86
30. भामहकृत काव्यालङ्कार5/66
31. ध्वन्यालोकः 1/1
32. ध्वन्यालोकः 1/13
33. ध्वन्यालोकः 1/13 कारिकाया वृत्तिः
34. ध्वन्यालोकः 1/4
35. काव्यप्रकाशः वृत्तिः 1.1
36. काव्यप्रकाशः 1.4
37. चन्द्रालोकः
38. अलङ्कारसर्वस्व
39. काव्यालङ्कारः
40. अलङ्कारसर्वस्व
41. भामह काव्यालङ्कारः 2/85

*सहायकाचार्यः ( अतिथिः )*
*केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः बलाहर, हि.प्र.*

ISSN 2582-2616

# रसविमर्शः

डा. सुदेष्णा दाशः

अयं रसशब्दः सर्वप्रथमं वेदेषु उल्लिखितः। यथा–दधानः कलसे रसम् इति ऋग्वेदे यथा वा ''रसो वै सः,'' ''रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति'' इति तैत्तिरीयोपनिषदि। अनेन विना काव्यं रसिकानां कृते निरसमनादृतं च भवति। यथोच्यते–

**साधुपाके विनास्वाद्यं भोजनं निर्लवणं यथा।**
**तथैव निरसं काव्यं स्यान्नो रसिकतुष्टे।।**

अतः अलौकिकविलक्षणस्यास्य रसस्य काव्यात्मत्वं सर्वैरङ्गीकृतम्। यथा–न हि रसादृते कश्चिदर्थः प्रवर्तते। इति भरतमुनिः प्रतिपाद्य स्वीकरोति यद्रस एव हि परमोत्कृष्टतया आस्वाद्यते। रसादयो हि द्वयोरपि तयोः जीवभूता:इति उद्घोषयन्–

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**

रसनैवं सर्वं जीवति काव्यम् इति अभिनवगुप्तमहाभागेन, काव्यस्यात्मनि रसादिरूपे न कस्यचिद्विमतिः इति अभिनवगुप्तमहाभागेन, काव्यस्यात्मनि रसादिरूपे न कस्यचिद्विमतिः इति महिमभट्टेन, ये रसस्याङ्गिनो धर्माः इति मम्मटेन , वाक्यं रसात्मकं काव्यमि ति विश्वनाथेन च रसस्य काव्यात्मत्वमङ्गीतम्। अग्निपुराणोऽपि वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् इत्यनेन रसस्य आत्मस्थानीयत्वमेव स्वीक्रियते।

**रसस्वरूप–**

अथ कोऽयं रसः किं वा तस्य निष्पत्तिः। इत्यादिषु प्रश्नेषु समुपजृम्भणेषु उच्यते भरतेन–यथा हिनाना व्यञ्जनसंस्कृतमन्नं भुञ्जानः रसानास्वादयन्ति सुमनसः पुरुषाः हर्षादींश्चाधिगच्छन्ति तथा नाना भावाभिनयव्यञ्जितान् वागङ्गसत्वोपेतान् स्थायिभावान् आस्वादयन्ति सुमनसः प्रेक्षकाः पुरुषाः हर्षादींश्चाधिगच्छन्ति। तस्मान्नाट्ये रसेति आभिख्यता इति। अत्र भोजनस्य कटुकषायतिक्तादि–लौकिकरसवत् नाटकस्यापि रत्यादिस्थायिभावा रसा इत्युच्यन्त इति भरतस्य वचनाज्ज्ञायते।

काव्यप्रकाशकर्त्ता मम्मटेन उक्तं यतविभावानुभावव्यभिचारिभावैर्यः व्यज्यते सः स्थायिभावरूप रस इत्युच्यते। तद्यथा–व्यक्तस्स तैर्विभावाद्यैः स्थायिभाव रसः स्मृतः इति। विश्वनाथोनापि उक्तम्–

**विभावेनानुभावेन व्यक्तः संचारिणा तथा।**
**रसतामेति रत्यादिः स्थायीभावः रसः स्मृतः।।**

विभावानुभावव्यभिचारिभावानां संयोगाद् व्यञ्जनाव्यापारेण अभिव्यञ्जितः सहृदयाणां हृदि विद्यमान रत्यादिस्थायीभाव रस इत्युच्यते। अत रसः ज्ञानकाले एव तिष्ठति अज्ञानकाले न विद्यते। स अतः अनित्य रसः। परमात्मा शुद्धचैतन्यमस्ति। दार्शनिकरहस्यम्। तदेव साहित्यदर्पणकारेण विश्वनाथेन प्रतिपादितम्। यथा–

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः**
**वेद्यान्तरस्पर्शशून्यो बह्मास्वादसहोदरः।**
**लोकोत्तरचमत्कारः प्राणः कैश्चित्प्रमातृभिः**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः।।**

**रसभेदाः**

रसस्य भेदगणनावसरे मतवैभिन्न्यं दृश्यते। नाट्यशस्त्रेऽस्य नवभेदाः स्वीकृताः यथा–

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**विभत्साद्भूतशान्ताश्च नाट्ये नवरसाः स्मृताः।।**

मम्मटाचार्येऽपि अष्टौ नाट्ये रसाः स्मृताः इत्युद्घोषयन् शान्तोऽपि नवमो रसः इति उपसमहार्षुः।

**शृङ्गाररसः–**

**शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।**
**उत्तमप्रकृतिप्रायो रसः शृङ्गार ईष्यते ।।**
**परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम्।**

**आलम्बनं नायिकाः स्युर्दक्षीणाद्याश्च नायकाः।।**
**चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम्।**
**भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः**
**त्यक्त्वौग्र्यमरणालस्यजुगुप्साव्यभिचारिणः।**
**स्थायीभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः।।**
**विप्रलम्भो सम्भोग इत्येष द्विविधो मतः।**

**इत्युक्ते-**

शृङ्गमृच्छतीति शृङ्गारः। शृङ्गं नाम कामुकयुगलयोरुत्पीडकम्। अनेन कामोद्भवेन यः सम्भूयते सः शृङ्गार इत्युच्यते। अस्य रसास्यालम्बनविभाव उत्तमप्रकृतिको नायकः। परकीया अनुरागशून्या अस्य आलम्बनानि न भवन्ति। तद्भिन्नाः नायिकास्तथा च दक्षिणनायका अस्योपयुक्तमालम्बनानि, चन्द्र-चन्द्रिका-चन्दनानुलेपन-भ्रमरझङ्कारादय उद्दीपनविभावा, भ्रूविक्षेप-कटाक्षादयोऽनुभावाः औग्र्य- मरण-आलस्य-जुगुप्सादिव्याभिचारिभावान् विहाय अन्ये चास्य पोषकाः भवन्ति। रतिरस्य स्थायिभावः। वर्ण श्यामो देवतां च विष्णुः। सम्भोगः, विप्रलश्चेति अस्य द्वौ भेदौ स्तः।

अस्योदाहरणं यथा- **शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः**
**निद्राव्याजमुपागतस्य सुचिरं निर्वर्व्य पत्युर्मुखम्।**
**विस्त्रब्धंपरिचुम्ब्य जापुलकामालोक्य गण्डस्थलिं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता।।**

अत्र व्याजेन सुप्तोऽन्ते च प्रियां चुम्बयन् पतिः, तथा च उक्तस्वरूपा बाला आलम्बनविभावौ। शून्यं वासगृहमुद्दीपनविभावः। लज्जाहासौ व्याभिचारिणौ। एतैरभिव्यक्तस्सहृदयविषय रतिभावः शृङ्गारः रसरूपतां भजते। अत्र सम्भोगाख्यः शृङ्गारो भवति। अन्ये भेदोपभेदा अपि परिकल्पितास्सन्ति।

**हास्यरसः**

**विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत्।**
**हास्यो हास्यस्थायिभावः श्वेतः प्रमथदैवतः।।**
**विकृताकारवाक् चेष्टां यामालोक्य हसेज्जनः।**
**तमत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्।।**
**अनुभावोऽक्षिसङ्कोचवदनस्मेरतादयः।**
**निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः।।**
**ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च।**
**निचानामपहसितं तथातिहसितं तदेष षड्भेदः।।**
**ईषाद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम्।**
**किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ।।**

मधुरस्वरं विहसितं सांसशिरः कम्पमविहसितम्। अपहसितं सास्त्राक्षं विक्षिप्ताङ्गं च भवत्यविहसितम्।

**विवेचनम्-**

यत्र अभिनेतुः आकारविकृतिः वाग्विकृतिः वेषविकृतिः, चेष्टाविकृतिरथवा अन्यविकृतयो वर्णिताः भवन्ति अथवा ताभिः विकृतिभिः अभिनयो भवति तत्र हास्यरसोऽभिव्यज्यते। अस्य स्थायीभावो हास्यः। वर्णः श्वेतः, देवता प्रमथगणः, वचनस्य चेष्टयाः विकृतिश्च आलम्बनविभावाः। नेत्रनिमीलनम्, मुखविकासादयश्चानुभावाः। निद्रा- आलस्य अवाहित्थादयः व्याभिचारिभावाः भवन्ति। एवमेतेषां विभावानुभावव्याभिचारिभावानां संयोगात् हासाख्यः स्थायिभावः रसरूपेण यत्र अभिव्यज्यते तत्र हास्यरसः। अस्य षड्भेदाः उच्यन्ते। यथा- 1 उत्तमप्रकृतिगतः स्मितहास्यः 2. उत्तमप्रकृतिगतः हसितहास्यः 3. मध्यमप्रकृतिगतः विहसितहास्यः 4. मध्यमप्रकृतिः अवहसितहास्यः 5. अधमप्रकृतिगतः अपहासितहास्यः 6. अधमप्रकृतिगतः अतिहसितहास्यश्च। नेत्रयोर्विकासोऽधरस्य स्पन्दनं स्मित इत्युच्यते। दन्तानां सामान्यदर्शनंहसितहास्यः येन हास्येन मधुरस्वरः निष्पद्यते तद् विहसितम् येन चक्ष्युर्भ्यामश्रुधारा प्रवहति तत् अपहसितम् येन हस्तपादानां वेगेन सञ्चालनं क्रियतेतत् अतिहसितम् इत्युच्यते। हास्यरसस्योदाहरणं यथा-

**गुरोर्गिरः पञ्चदिनान्यधीत्य, वेदान्तशास्त्राणि दिनत्रयं च।**
**अमी समाघ्राय च तर्कवादान्समागताः कुक्कुटमिश्रपादाः।।**

**करुणरसः-**

**इष्टनाशादनिष्टाप्तेकरुणाख्यो रसो भवेत।**
**धीरैः कपोतवर्णोऽयं कथितो यमदैवतः।**
**शोकोऽत्र स्थायीभावः स्यातछोच्यमालम्बनं मतम्।**
**तस्य दाहादिकावस्था भवेदुद्दीपनं पुनःषष।।**
**अनुभावाःदैवनिन्दा भूपातक्रन्दितादयः।**
**वैवर्ण्योच्छ्वासिनिः श्वास-स्तम्भ-प्रलपनानि च।।**
**निर्वेदमोहपस्मार व्याधिलग्नानिस्मृतिश्रमाः।**
**विषादजडतोन्मादचिन्दाद्याः व्यभिचारिणः।।**

करुणरसः ईष्टवस्तुनः नाशादथवा अनिष्टद्रव्यस्य प्राप्तिकारणात् व्यज्यते। शोकस्थायिभावयम-दैवतकपोतवर्णात्मकोऽयं रसः। आलम्बनो विनष्टव्यक्तिः

**विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः।**
**अनयोर्घटनाविधेः स्फुटं खड्गेन शिरीषर्तनम्।।**

अत्र आलम्बनं रामः, उद्दीपनं वनवासः, अनुभावःदैवनिनम्, विषादचिन्तादयो व्यभिचारिभावाः। एतेषां संयोगात् शोकाख्यः स्थायीभावः करुणरसरूपेण अभिव्यज्यते।

**रौद्ररसः-**

**रौद्रः क्रोधस्थायीभावो रक्तो रुद्राधिदैवतः**
**आलम्बनमरिस्तस्य तच्चेष्टेद्दीपनं मतम्।।**
**मुष्टिप्रहारपातनविकृतच्छदावदारणैश्चैव।**
**संग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत्प्रौढाः।।**
**भ्रूविभङ्गौष्ठनिर्देशबाहुस्फोटनतर्जनाः।।**
**आत्मावदानकथनमायुधोत्क्षेपणानि च।**
**अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः।**
**उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः।।**
**मोहामर्षादस्तत्र भावाः स्युर्व्यभिचारिणः।।** (सा.द.)

अस्यवर्णः रक्तः, देवता रुद्रः, आलम्बनं शत्रुः उद्दीपनं शत्रोश्चेष्टादयः। यथा-मुष्टिप्रहारः भूपातनम्, भयङ्करच्छेदनं, शरीरविदारणं, संग्रामः, सम्भ्रमश्च। अस्य अनुभावाः भ्रूभङ्ग-ओष्ठनिदर्शन- बाहुस्फोटन- अग्रता-अवेग-रोमाञ्च-स्वेद-कम्प-मद-आक्षेप-क्रुरदृष्ट्यादयः भवन्ति। मोहामर्षादयोऽत्र व्यभिचारिभावाः। अस्य उदाहरणं यथा-

**कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं**
**मनुजपपशुभिर्मर्यदैर्भवद्भिरुदायुधैः**
**नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-**
**मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्।।**

अत्र अश्वत्थाम्नः क्रोधो व्यज्यते। आलम्बनं पाण्डवादयः शत्रवः उद्दीपनञ्च द्रोणाचार्यस्य हननक्रिया, अनुभावाः अश्वत्थाम्नः क्रुरदृष्टि-शस्त्रोत्क्षेपणादयः, अमेर्षो व्यभिचारिभावोऽस्ति अतः रौद्ररसोऽभिव्यज्यते।

**वीररसः-**

**उत्तमप्रकृतिर्वीर उत्साहस्थायिभावः।**
**महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतम्।**

**आलम्बनाविभावास्तु विजतेव्यादयो मताः।**
**विजतेव्यादिचेष्टाद्यास्तस्योद्दीपनरूपेण।।**
**अनुभावास्तु तत्र वीररसो सहयान्वषणादयः।**
**सञ्चारिणस्तु धृतिमतिवर्गस्मृतितर्करोमाञ्चाः।।**
**स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात्।** (सा.द.)

**विवेचनम्-**

यत्रोत्साहः स्थायिभावो भवति तत्र वीररसो ध्वन्यते। उत्तमप्रकृतिकः जनोऽस्याश्रयः वर्णः सुवर्णः देवता महेन्द्रः आलम्बनं शत्रुः, उद्दीपनं शत्रोश्चेष्टाः, अनुभवाः युद्धादिसामग्रोऽथवा अन्यान्यसाधनानामन्वेषणं धृति-मति-गर्व- स्मृति -तर्क-रोमाञ्चाः व्यभिचारिभावाः भवन्ति। अस्य रसस्य चत्वारो भेदाः उच्यन्ते। यथा- 1 दानवीरः 2. धर्मवीर 3. युद्धवीरः 4. दयावीरश्च। उदाहरणं यथा-

**भो लङ्केश्वर। दीयतां जनकजां रामः स्वयं याचते।**
**कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद्गतम्।**
**नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः**
**पत्रो नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः।।**

अस्मिन् लोके श्रीरामचन्द्रस्य युद्धोत्साहो वर्णितः।

**भयानकरसः-**

**भयानको भयस्थायीभावो भूताधिदैवतः।**
**स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः।।**
**यस्मादुत्पद्यते भीतस्तदत्रालम्बनं मतम्।**
**चेष्टाधोरतरास्तस्य भवेदुद्दीपनं पुनः।।**
**अनुभवोऽत्र वैवर्ण्यद्गदस्वरभाषणम्।**
**प्रलयस्वेदरोमाञ्चकम्पादिक्प्रेक्षणादयः।।**
**जुगुप्सावेगसंमोहसत्रासम्लानिदीनताः।**
**शङ्कापस्मारसम्भ्रान्तिमृत्वाद्या व्यभिचारिणः।।**

भयानकरसः भवति यत्र भयरूपस्थायिभाव आस्वाद्यते। अस्य वर्णः कृष्णः देवता कालः। अस्याश्रयाः स्त्रीयोऽथवा नीचप्रकृतिकाः जनाः भवति। आलम्बनं भयोत्पादकापदार्थाः, भयोत्पदार्थानां चेष्टा उद्दीपनाविभावा इत्युच्यते। विवर्णता-गद्गदभाषण-प्रलय-स्वेद-स्वेदाञ्च-कम्प- इतस्ततोवलोकानानि अस्यानुभावाः कथ्यन्ते। जुगुप्सा-आवेग-संमोह-ग्लानि-दीनता-शङ्का-उपस्मार-संभ्रम-मरणादयोऽस्य व्यभिचारिभावाः सन्ति।

उदाहरणं यथा-

नष्टं बर्षवरैर्मनुष्यगणनाभावादयस्य त्रपा-

**मन्तः कञ्चकिकञ्चु विशति त्रासादयं वामनः ।**
**पर्यन्ताश्रयिर्निजस्य सदृशं नाम्नः किरातैः कृतं**
**कुब्जा निचतयैव यान्ति शनकैरात्मेक्षणा शङ्किनः।।**

अत्राकस्मादागतो वानर आलम्बनविभावः, तस्य उग्रदन्तप्रकाशानादिरुद्दीपनविभावः, एवमेतैर्मिलितैरास्वाद्यमानो भयं स्थायिभावः सामाजिकानां रसतामापद्यते।

बिभत्सरसः

**जुगुप्सा स्थायिभावस्तु विभत्सः कथ्यते**
**रसः नीलवर्णो महाकालदैवतोऽयमृदाहृतः।**
**दुर्गन्धमांसरुधिरभेदांस्यालम्बनं मतम्।**
**तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम्**

**निष्ठीवनास्यवलननेत्रसङ्कोचनादयः।**
**अनुभावस्तत्र मतास्तथा स्युर्व्यभिचारिणः।।**
**पोहोऽपस्मार ओवेगो व्याधिश्च मरणादयः।।** (सा.द.)

अस्य वर्णः नीलम्। देवता महाकालः दुर्गन्धिमांस-रुधीरमेदांसि अस्य आलम्बनविभावाःउच्यन्ते। मांसरुधिरादिषु कृमिपातनमुद्दीपनं भवति। बिभत्सरसे निष्ठीवनं (थुत्कप्रक्षेपः), मुखसंवरणम्, नेत्रसंकोचनम्, वान्तादिश्च अनुभावाः सन्ति। मोहः अपस्मारः, आवेग, व्याधिः, मरणम्, ग्लानिरित्यादयश्च व्यभिचारिणः कथ्यन्ते।

उदाहरणं यथा-

**उत्कृत्योत्कृत्यकृतिं प्रथमथ पृथूच्छोथभूयांसिमांसा**
**न्यंसस्फिक् पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।**
**आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतटङ्कः करङ्का-**
**दङ्कस्थादस्थिस्थं स्थपुटगतमपि क्रव्यमव्यग्रमति।।**

शवः प्रेतरङ्को वा आलम्बनविभावः, तत्कर्त्तनं मांसभक्षणमुद्दीपनविभावः तद् द्रष्टुः नासाकूञ्चन-वदनविधूनन-विवर्त्तन-निष्ठीवनादयोऽनुभावाः, उद्वेगग्लान्यादयः व्यभिचारिभावाः, एतैः सम्बलित आस्वाद्यमानः जुगुप्सा स्थायिभावः बिभत्सरसत्वेनास्वाद्यते।

**अद्भूतरसः-**

**अद्भूतो विस्मयस्थायिभावो गन्धर्वदैवतः।**
**पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्।**
**गुणानां तस्य महिमा भवेदुद्दीपनं पुनः।**
**स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसम्भ्रमः।।**
**तथानेत्रविकासाद्या अनुभावाः प्रकीर्तिताः।**
**वितर्कावेगसम्भ्रान्तिहर्षाद्याः व्यभिचारिणः।।**

अस्य- गन्धर्वो देवता वर्णः पीतवर्णः, लोकाद्भिन्नम् इन्द्रजालादिकं वस्तु आलम्बनविभावः। तेषां गुणमहिमा उद्दीपनम्, स्तम्भः (जाड्यम्), स्वेदः, रोमाञ्च गद्गदस्वरः, सम्भ्रमः वेगास्तथा नेत्रप्रकाशादयोऽनुभावा भवन्ति। वितर्क-आवेग-सम्भ्रान्तिर्जडत्व-हर्ष-औत्सुक्यादयश्च व्यभिचारिणः भवति।

उदाहरणम्-

**दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डा वभङ्गोद्यत-**
**ष्टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डमः।**
**द्राक्पर्यस्तकपालसम्पुटमिलद् बह्माण्डभाण्डोदर-**
**भ्राम्यात्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति।** (महावीरचरित)

अत्र धनुष्टङ्कारः आलम्बनविभावः तस्य विशालता उद्दीपनविभावः, तस्य एतादृशवर्णनमनुभावः हर्षादयः व्यभिचारिभावाः, लक्ष्मणस्य विस्मयः स्थायिभावः, एतत्समुदितोऽद्भूतरस आस्वाद्यते।

**शान्तरसः-**

**शान्तः शमस्थायिभावः उत्तमप्रकृतिर्मतः।**
**कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः।**
**अनित्यत्वादिनाशेषवस्तु निःसारता तु या।**
**परमात्मस्वरुपं वा तस्यालम्बनमिष्यते।।**
**पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः।**
**महापुरुष सङ्गाद्यास्तस्योद्दीपनरुपिणः।।**
**रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः।**
**निर्वेदहर्षस्मरणमतिभूतदयादयः ।।**

यस्य शमः स्थायिभावोऽस्ति सः शान्तरसः। उत्तमप्रकृतिका जना एव अस्य रसस्यास्वादनं कुर्वन्ति। अस्य वर्णः कुन्दपुष्पस्य चन्द्रस्य च सुन्दरच्छाया इव धवलो भवति। देवता अस्य नारायणः। संसारः अनित्यः आधिभौतिक -आध्यात्मिक-आधिदैविकादिदुःखमयोऽस्तीति विचिन्त्य सांसारिकविषयान् प्रति अरुचिः, तेषां निःसारतायाः ज्ञानं , परमात्मनः स्वरूपज्ञानं च शान्तरसस्यालम्बनविभावाः।

**न तत्र दुःख न सुखं न चिन्ता, न द्वेषरागौ न च काचिदिच्छा।**
**रसः स शान्तः कथितो मुनिन्द्रैः, सर्वेषु भावेषु समप्रमाणः।।**

उदाहरणं यथा- **रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालस्याध्वगैः**
**सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः।**
**निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे।**
**निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठीष्यति।।**

समस्त सुखहेतूपक्षेपणात् लब्धाशेषवस्तुनिः सारता आलम्बनविभावाः, नागरैः उक्तरूपेण दर्शनानि उद्दीपनाविभावाः, भिक्षावलुण्ठानाशंसालभ्यौ रोमाञ्चहर्षो अनुभावव्यभिचारिणौ, वक्तुः भिक्षोः शमः स्थायिभावः। एषः समुदायः सामाजिकेषु शान्तरसतया परिणमति।

## पादटिप्पणी

1. ऋग्वेद
2. तैत्तिरीयोपनिषद्
3. नाट्यशास्त्रम्
4. धन्यालोके
5. अभिनवभारती
6. व्यक्तिविवेकः
7. काव्यप्रकाशः
8. साहित्यदर्पण
9. अग्निपुराणम्
10. काव्यप्रकाशः
11. साहित्यदर्पणः
12. अग्निपुराणम्
13. नाट्यशास्त्रम्
14. काव्यप्रकाशः
15. साहित्यदर्पणः
16. साहित्यदर्पणः
17. साहित्यदर्पणः
18. साहित्यदर्पण
19. साहित्यदर्पणः
20. साहित्यदर्पणः
22. साहित्यदर्पणः
23. मालतीमाधवे अ.5
24. साहित्यदर्पणः

## सन्दर्भग्रन्थसूचीः


1. अग्निपुराणम्, गीताप्रेस, गोरखपुर, प्रथमसंस्करणम्, 20/9
2. अलङ्कारशास्त्रस्येतिहासः-डा. जगदीशचन्द्र मिश्रः चौखम्बा प्रकाशनम् वाराणसी, प्रथमसंस्करणम् -2001
3. ऋग्वेदः-अनु. व्या. सम्पा. डा. जियालाल काम्बोज, विद्यानिधि प्रकाशन, दिल्ली-2004
4. काव्यप्रकाशः-श्रीमम्मटभट्टविरचितः, प्रो. विश्वनाथभट्टाचार्य, प्रो. जयशङ्करलाल त्रिपाठी, का. हि. विश्वविद्यालयसंस्कृतग्रन्थमाला, का. हि. वि. वि. वाराणसी-2003
5. काव्यप्रकाशः- (मम्मटः), झलकीकरटीका- परिमलपब्लिकेशन् दिल्ली, परिमलसंस्कृतग्रन्थमाला,97
6. काव्यालङ्कारः-भामहः, मोतिलाल वनारसदास, वाराणसी, 197 ?
7. काव्यालङ्कारसूत्राणि - वामनः, चौखम्बा संस्कृत संस्थानम्, वाराणसी, 2009
8. ध्वन्यालोकः (लोचनटीका)- आनन्दवर्धनः, तारावती हिन्दीव्याख्या- डा. रामसागरत्रिपाठी, मतीलाल वनारसीदास, वाराणसी,1973
9. ध्वन्यालोके काव्यसंपदः- डा. सत्यनारायण आचार्यः, प्रियम्बदाप्रकाशन, पुरी, ओडिशा, 1992
10. नाट्यशास्त्रम्, भरतमुनि-आर. एस्. नागर, परिमलपब्लिकेसन्, दिल्ली, 2003
11. संस्कृतसाहित्यस्य इतिहासः-प्रो. हरेकृष्ण शतपथी, किताब महल,कटक, 1998
12. साहित्यदर्पणम्-विश्वनाथः, नागप्रकाशनम्, दिल्ली, 1999


*प्राध्यापिका ( अतिथिः )*
*सर्वकारीय संस्कृत महाविद्यालयः*
*बारीपादा, मयूरभञ्ज, ओडिसा।*

ISSN 2582-2616

# चम्पूकाव्यपरम्परायां त्रिविक्रमभट्टः

**डॉ. अरविन्द कुमार पाण्डेय**

**परिचयः-**

'कवृ-वर्णने' इति धातोः 'कवते' इति विग्रहे कविशब्दस्य सिद्धिः। ततः 'कवेः कर्म' इति विग्रहे 'गुणवचन-ब्राह्मणादिभ्यः कर्मणि च' इति पाणिनिसूत्रेण ष्यञ्-प्रत्ययेन काव्यशब्दो निष्पद्यते। एतच्च कविकर्म रमणीयं रसात्मकम्, शब्दार्थयुगलम्, शब्दात्मकं वेत्यपि विद्वांसो वदन्ति। यद्यपि किं नाम काव्यम्? इति जिज्ञासायां तत्तदाचार्योक्तानि भूयांसि काव्यलक्षणानि प्राप्यन्ते काव्यशास्त्रग्रन्थेषु तथापि सामान्यतः कविकर्म एव काव्यम् इति। 'प्रयोजनम् अनुद्दिश्य मन्दोऽपि न प्रवर्तते' इति प्रसिद्धवचनमनुसृत्य काव्यतत्त्वज्ञाः काव्यस्य बहूनि प्रयोजनानि प्रदर्शितवन्तः। भारतीयपरम्परायां समेषां प्रयोजनानाम् अन्तर्भावः धर्मार्थकाममोक्षाख्येषु चतुर्विधप्रयोजनेषु क्रियते। एतान्येव कस्यचिदपि शास्त्रस्य मुख्यानि प्रयोजनानि भवन्ति। काव्यशास्त्रस्यापि इदमेव प्रयोजनमवगन्तव्यम्। अत्र अल्पधियामपि सुखात् सर्वपुरुषार्थप्राप्तिर्भवतीति विशेषः। तथा आह विश्वनाथः-

**''चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते।।''**

काव्यमिदं विविधदृष्ट्या बहुविधं वर्तते। काव्यशास्त्रपरम्परायां काव्यस्य विभाजनं स्वरूपदृष्ट्या अर्थदृष्ट्या च मुख्यतः परिलक्ष्यते। स्वरूपदृष्ट्या काव्यं दृश्यश्रव्यादिभेदेन नैकविधम्। तत्र श्रव्यकाव्येषु चम्पूकाव्यस्य वैशिष्ट्यं सर्वविदितमेव। अत्र निबन्धे काव्यप्रकारेषु विशिष्टतमस्य चम्पूकाव्यस्य स्वरूपं विकासश्च विविधैः प्रमाणैः प्रतिपादयिष्यते। ततः प्रथमचम्पूकाव्यकर्तुः त्रिविक्रमभट्टस्य परिचयं विधाय तत्प्रणीतस्य नलचम्पूकाव्यस्य समीक्षा अपि किञ्चित् करिष्यते।

**काव्यप्रकाराः-**

काव्यशास्त्रपरम्परायां काव्यस्य विभाजनं नैकविधं प्रस्तुतमाचार्यैः। तत्र व्यङ्ग्यादिनिष्ठचमत्कृतिमाश्रित्य ध्वनिकाव्यादिभेदाः प्रतिपादिताः काव्यशास्त्रिभिः। एवमेव दृश्यश्रव्यत्वभेदेन पुनः काव्यस्य द्वैविध्यं स्वीकृतं वर्तते। तत्र अभिनयात्मके दृश्यकाव्ये नाटकादीनां दशरूपकाणां समावेशो भवति। श्रव्यकाव्यं गद्य-पद्यात्मकभेदेन द्विधा भवति। साहित्यदर्पणे मुक्तकादिभेदेन गद्यस्य चतुर्विधत्वं प्रतिपाद्यकथा-आख्यायिकादिभेदेन गद्यात्मककाव्यस्य बहुधा विभागः प्रदर्शितः वर्तते। श्रव्यकाव्यस्य पद्यात्मकविभागे पद्यस्य संख्यात्मकवृद्धिम् आश्रित्य मुक्तकादिभेदेन पञ्चविधत्वं प्रदर्श्य महाकाव्य-खण्डकाव्यादिभेदेन पद्यात्मककाव्यस्य विभागः निरूपितो वर्तते। तत्र गद्यपद्ययोरुभयोः एकत्र तुल्यस्थितिर्नाम चम्पूकाव्यम्, यस्यान्तर्भावोऽपि श्रव्यकाव्ये एव भवति ।

**चम्पूकाव्यम् -**

गद्यपद्यमयी-रचना चम्पूपदेन व्यवह्रियते। चुरादिगणपठितात् 'चपि-गतौ' इति धातोः चम्पयतीति विग्रहे 'उ' प्रत्यये सति चम्पूशब्दस्य सिद्धिः। हरिदासभट्टाचार्यः 'चमत्कृत्य पुनाति सहृदयान् विस्मयीकृत्य प्रसादयतीति' चम्पूशब्दस्य व्युत्पत्तिं प्रदर्शयामास। व्युत्पत्या अनया रूपसिद्धिः मात्रं भवति, यस्याः रचनायाः कृते चम्पूशब्दस्य प्रयोगो भवति सोऽर्थः अनया व्युत्पत्त्या सरलतया नागच्छति। गद्यपद्यमयीरचनायाः आरम्भः वैदिकयुगादेव दृश्यते। यजुर्वेदे, ब्राह्मणग्रन्थेषु, उपनिषत्सु इयं शैली दृग्गोचरीभवति। बौद्धजातककथास्वपि काव्यपद्धतिरियं दृष्टिगता। समुद्रगुप्तस्य (360 ई.) स्तम्भलेखे गद्यपद्यमयी रचना वर्तते। यद्यपि वैदिककालादेव गद्यपद्यमिश्रितं काव्यं दृष्टं भवति तथापि तस्य परिष्कृतं स्वरूपं दशमशताब्द्यामेव प्राप्यते।

चम्पूकाव्यस्य शास्त्रीयं विश्लेषणं सर्वप्रथमं काव्यादर्शे दण्डिना व्यधायि। तत्र हि 'गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते' इति स्वरूपं दर्शितम्। भोजराजेन श्रृङ्गारप्रकाशे चम्पूकाव्यस्य लक्षणमित्थं परिभाषितम्-

**''याऽऽख्यायिकेव साङ्का सोच्छ्वासा दिव्यपद्यगद्यमयी।**
**सा दमयन्ती-वासदत्तादिरिहोच्यते चम्पूः।।''**

भोजराजः 'रामायणचम्पूः' इति नामधेयं चम्पूकाव्यमपि रचितवान्। तत्र काव्यस्यास्य विशेषताः इत्थं निरूपिताः-

''गद्यानुबन्धरसमिश्रितपद्यसूक्तिर्हृद्या हि वाद्यकलया कलितेव गीतिः।
तस्माद् दधातु कविमार्गजुषां सुखाय चम्पूप्रबन्धरचना रसना मदीया।।''

ततः 'गद्यमपद्यमयं काव्यं चम्पूरित्यभिधीयते' इत्युक्तवान्आचार्य-विश्वनाथः साहित्यदर्पणे। अर्थात् यस्मिन् काव्ये गद्यं पद्यञ्चोभयं भवति तत्काव्यं चम्पूरिति। यद्यपि कथाऽख्यायिकयोरपि गद्यपद्यमयत्वं दृष्टिगतं तथापि तयोः चम्पूरिति पदेन न व्यवहारः। अत्रेदं कारणं वक्तव्यम्-कथाऽख्यायिकयोः गद्यस्यैव प्राधान्यम्, चम्पूकाव्येषु गद्यपद्ययोर्मध्ये न किमप्येकं प्रधानम्। अत्र उभयोरेव प्राधान्यं भवति। नाटकादिरूपकेष्वपि

ISSN 2582-2616
गद्यपद्यमयत्वं भवति परन्तु तत्तु दृश्यकाव्येऽन्तर्भवतीति न तस्य चम्पूपदेन व्यवहार:। रूपकेषु यदि उक्तिप्रत्युक्तिरूप: संवाद: अपाक्रियते तदा तत् काव्यं चम्पू: भवतीति केषाञ्चिदभिमतम्। तथाहि देवज्ञपण्डितविरचिते नृसिंहचम्पूग्रन्थे लक्षणमिदं प्राप्यते–

**''गद्यपद्यमयी साङ्का सोच्छ्वसा कविगुम्फिता।**
**उक्तिप्रत्युक्तिविष्कम्भकशून्या चम्पूरुदाहृता।।''**

अत्रेदमपि ध्येयं भवति यद् सर्वाणि गद्यपद्यमिश्रितानि काव्यानि चम्पूकाव्यत्वेन न ज्ञायन्ते। मिश्रकाव्यानाम् अन्या संज्ञा अपि साहित्यशास्त्रविज्ञै: प्रदीयते। तथाहि–

**''गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते।**
**करम्भकं तु विविधाभिर्भाषाभिर्विनिर्मितम्।।''**

अर्थात् यदा राजस्तुतिमाश्रित्य गद्यपद्यमयीरचनाया: निमिर्तिर्भवति तदा तत्काव्यं विरुदमितिपदेनोच्यते। यथा–विरुदमणिमाला। एवमेव यदा विविधा: भाषा: आश्रित्य गद्यपद्यमयीरचनाया: निमिर्तिर्भवति तदा तत्काव्यं करम्भकमितिपदेनोच्यते। यथा–षोडशभाषामयी प्रशस्तिरत्नावली। केरलेषु चम्पूकाव्यानि 'प्रबन्ध' इति पदेन व्यवह्रियन्ते। एतानि प्रबन्धकाव्यानि पाठमाध्यमेन गानमाध्यमेन अभिनयमाध्यमेन वा सामाजिका: जानीयुरिति धिया एतेषां रचना क्रियते स्म। एवं रीत्या वैदिककालादेव प्रचलन्त्या: आख्यानोपाख्यानशैल्या: पुनराविष्कार एव चम्पू: अस्ति। उपरिनिर्दिष्टानां विषयाणां पर्यालोचनेन चम्पूकाव्यलक्षणस्वरूपमित्थमवगन्तुं शक्यते–

1. चम्पूकाव्यं गद्यपद्यमिश्रितं श्रव्यञ्च भवति।
2. प्रबन्धकाव्यं भवति।
3. वर्णनप्रधानं भवति।
4. अलङ्कारबहुलमेवं सरसं भवति।

चम्पूकाव्यस्य वैशिष्ट्यमिदं वक्तुं शक्यते यदत्र गद्यपद्ययो: किमप्येकं प्रधानं न भवति। यद्यपि कियान्नंश: गद्यभाग: कियान्नंश: पद्यभागो भविष्यतीति विषये न कश्चन नियमविशेष: तथापि किमप्येकमङ्गम् अतिविस्तृतं न भवेत् इत्यस्मिन्नंशे रचनाकारा: सतर्का: तिष्ठन्ति। कवि: यथाप्रसङ्गम् आवश्यकतानुसारं वर्णनानुकूलं गद्यं पद्यं वा रचयति। अत्र गद्यपद्योभयविधासु रचनाकौशलप्रदर्शनावसर:, तेन रचनायां द्विविधा चमत्कृति: जायते। दशमशतकात् विंशशतकपर्यन्तं बहूनां चम्पूकाव्यानां रचना जाता। प्रायश: अनेके चम्पूग्रन्था: कालगर्भे लीना: केवलमल्पसङ्ख्ययैवेदानीं समुपलभ्यन्ते तेष्वपि अत्यल्पा एव प्रकाशिता:। त्रयोदशशताब्द्यां स्थित: विश्वनाथ: स्वकीये साहित्यदर्पणे 'देशराजचरितम्' इति नामकं चम्पूकाव्यम् उदाजहार। इयमपि चम्पू: साम्प्रतं नोपलभ्यते। विदितचम्पूकाव्यानां सङ्ख्या प्राय: 250 अस्ति।

**त्रिविक्रमभट्ट: –**

संस्कृतसाहित्ये बहव: कवय: तेषां कृतयश्च विलसन्ति। तेषु त्रिविक्रमभट्टस्य महत्त्वमपरोक्षं वर्तते विपश्चिदाम्। त्रिविक्रमभट्ट: नलचम्पो: प्रारम्भे स्वकीयं परिचयं प्रस्तुतवान्। तदनुसारेणायं श्रीधरस्य पौत्र:, नेमादित्यस्य पुत्र: शाण्डिल्यगोत्रोत्पन्न: ब्राह्मण:।

'पद्ये पटीयान् किल कालिदास:, गद्ये पटीयान् किल भट्टभाण: ' इति वामनभट्टबाणवचनेन तथ्यमिदं पुष्टं भवति यद् पद्यकाव्यनिर्माणे कालिदास:, गद्यकाव्यनिर्माणे च बाण: सर्वापेक्षया उत्कृष्ट:। एवमेव पाटवं वर्तते त्रिविक्रमभट्टस्य चम्पूकाव्यनिर्माणे। घण्टामाघ: यथा माघस्योपाधि: यथा च आतपत्रभारवि: भारवे: तथैव 'यमुनात्रिविक्रम' इत्युपाधि: वर्तते त्रिविक्रमभट्टस्य।

**''उदयगिरिगतायां प्राक् प्रभापाण्डुताया–मनुसरति निशीथे श्रृङ्गमस्ताचलस्य।**
**जयति किमपि तेज: साम्प्रतं व्योममध्ये सलिलमिव विभिन्नं जाह्नवं यामुनञ्च।।''**

**त्रिविक्रमभट्टस्य काल: –**

त्रिविक्रमभट्ट: नलचम्पूग्रन्थे पूर्ववर्त्तिनां कवीनां प्रशंसाप्रसङ्गे गुणाढ्यं बाणभट्टञ्च स्मरति। राजाभोज: सरस्वतीकण्ठाभरणे नलचम्पूपद्यम् उद्धृतवान् । इत्थं ज्ञायते यत् त्रिविक्रमभट्ट: सप्तमशताब्द्यां लब्धजन्मस्य महाकविबाणस्य परवर्ती अथ च एकादशशताब्द्यां लब्धजन्मस्य भोजराजस्य पूर्ववर्ती। एवमेव त्रिविक्रमभट्टेन कुरुण्डकताम्रपत्रे इन्द्रराजतृतीयस्य प्रशस्ति: लिखिता, यत्र स्वपितु: नामोल्लेखोऽपिकृतो वर्तते।

**''श्रीत्रिविक्रमभट्टेन नेमादित्यस्य सूनुना।**
**कृता शस्ता प्रशस्तेयमिन्द्रराजङ्घ्रिसेविना।।''**

इन्द्रराजतृतीयस्य राज्याभिषेकसमय: कुरुण्डकलेखानुसारेण 915 ई. इति वर्तते। अतश्च त्रिविक्रमभट्ट इन्द्रराजतृतीयस्य प्रधानपण्डित: 915 ई. वर्षे संजात इति कुरुण्डकलेखात् स्पष्टीभवति। इत्थं त्रिविक्रमभट्टस्य स्थितिकाल: दशमशताब्द्या: पूर्वार्ध एवेति निश्चीयते।

**त्रिविक्रमभट्टस्य कृतय:–**

महाकवे: त्रिविक्रमभट्टस्य नलचम्पू:, मदालसाचम्पू: इति कृतिद्वयं प्रथितमस्ति। केचन समीक्षका: द्वयो: ग्रन्थयो: तुलनात्मकाध्ययनम् आधारीकृत्य एवमपि वदन्ति यद् मदालसाचम्पू: त्रिविक्रमभट्टस्य कृतिर्नास्ति।

ISSN 2582-2616

**नलचम्पूकाव्यं तस्य वैशिष्ट्यञ्च–**

इदानीमुपलभ्यमानेषु चम्पूकाव्येषु त्रिविक्रमभट्टस्य नलचम्पूः इति प्रथमम्। श्रृङ्गारप्रधानग्रन्थोऽयं सप्तसूच्छ्वासेषु विभक्तः। अत्र दमयन्त्याः नलस्य च प्रणयकथा वर्णिता विद्यते। साधारणोऽयं विषयः यद्यस्य कस्यापि ग्रन्थस्य नाम तदितिवृत्तमाधारीकृत्य निर्धार्यते। अभिज्ञानशाकन्तुलवेणीसंहारादिग्रन्थेषु अपि इयं परिपाटी एतादृशी दृश्यते। नायिकानायकयोर्वा इतिवृत्तस्य केन्द्रबिन्दुरूपघटनायाः वा सूचना तत्तन्नामसु भवति। काव्यस्यास्य वैशिष्ट्यमित्थं ज्ञातुं शक्यते–

**पूर्ववर्तिनां कवीनां प्रसङ्गे वर्णनवैचित्र्यम्–**

त्रिविक्रमभट्टः स्वपूर्ववर्त्तिनां कवीनां ये गुणाः आसन् तान् एकत्र क्रोडीकर्तुं नलचम्पूकाव्यरचनायां प्रवृत्तः। सः वाल्मीकिरामायणस्य वैशिष्ट्यं प्रतिपादनाय विरोधाभासेन वाल्मीकिं वन्दते। तथाहि–

**''सदूषणाऽपि निर्दोषा सखराऽपि सुकोमला।**
**नमस्तस्मै कृता येन रम्या रामायणी कथा।।''**

अत्र दूषणं दोषः तेन सहिताऽपि निर्दोषेति विरोधः। एवमेव खरः कठिनः कठोरः तेन सहिताऽपि सुकोमलेति विरोधः। परिहारस्तु दूषणखरौ राक्षसौ अत्र वर्णितौ स्तः।

श्लोकस्यास्य छायां गृहीत्वा महाकविना तुलसीदासेनापि रामायणस्य महत्त्वं प्रदर्शितम्–

**''बन्दउँ मुनि पदपङ्कज, रामायण जेंहि निरमयऊ।**
**सखर सुकोमल मञ्जु दोसरहित दूसण सहित।।''**

एवमेव व्यास–सुबन्धु–बाणादीनां महाकवीनामभिवादनेऽपि त्रिविक्रमभट्टेन श्लेषमयवाण्या नूतनः एव चमत्कारः प्रदर्शितः।

**श्लिष्टवाक्यानानां प्रयोगः–**

महाकविः त्रिविक्रमभट्टः श्लेषप्रयोगे अद्वितीयः। तेन नलचम्पूकाव्यस्य प्रारम्भः एव श्लेषमूलकालङ्कारप्रयोगेण कृतम्। वस्तुतः ग्रन्थस्य आरम्भे एव तेन श्लेषालङ्कारस्य वैशिष्ट्यं प्रतिपादयन् स्वस्य श्लेषनिबन्धने प्रवृत्तिकारणं प्रदर्शितम्। यथोक्तं तेन–

**''प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः।**
**भवन्ति कस्यचित् पुण्यैर्मुखे वाचो गृहे स्त्रियः।।''**

एवं सभङ्गश्लेषप्रियोऽयं कविः पाठकान् निवेदयति यत् भङ्गश्लेषे वाचः काठिन्यमायान्ति परन्तु तत्रोद्वेगो न कर्त्तव्यः–

**''वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः।**
**नोद्वेगस्तत्र कर्तव्यो यस्मान्नैको रसः कवेः।।''**

इत्थं श्लेषालङ्कारस्य वैशिष्ट्यं प्रतिपादयन् महाकविना काव्येऽस्मिन् पदे–पदे श्लेषस्य चमत्कारः उदाहृतः। यथा निषधायाः वर्णने महाकविना श्लेषस्याद्वितीयमेव निदर्शनं कृतम्–

''बहुलक्षणा सुधावन्तो दृश्यन्तेऽन्तः प्रचुराः प्रासादाः बहिश्च वारणेन्द्राः। सुशोभितरङ्गाः समालोक्यन्तेऽन्तः सङ्गीतशाला बहिश्च क्रीडाकमलदीर्घिका।''

अत्र महाकविना निषधानगर्याः अन्तःस्थितानां बहिःस्थितानां पदार्थानां कृते सामान्येनैव विशेषणेन श्लिष्टवाक्यानां चमत्कारः प्रदर्शितः, यस्तु अनुकरणीय एव।

एवमेव महाकविना आर्यावर्तप्रसङ्गे, वनवर्णने, हंसस्य वर्णनप्रसङ्गे श्लेषस्य विशिष्टाः एव प्रयोगाः प्रदर्शिताः।

**आर्यावर्त–निषधावर्णनप्रसङ्गे अलङ्काराणामनुपमप्रयोगः–**

महाकविना त्रिविक्रमभट्टेन आर्यावर्तस्य वैशिष्ट्यं प्रतिपादनाय महाकवेः बाणस्य वर्णनशैली आश्रिता यत्र प्राथम्येन महाकविना आर्यावर्तस्य सामान्यपरिचयः प्रदत्तः ,ततः परिसंख्याद्यलङ्कारप्रयोगेण आर्यावर्तस्य वैशिष्ट्यं प्रतिपादितम्। तथाहि–

''कुष्ठयोगी गन्धिकापणेषु, स्फोटप्रवादो वैयाकरणेषु, ग्रहसङ्क्रान्तिः ज्योतिः शास्त्रेषु, भूतविकारवादः साङ्ख्येषु, क्षयस्तिथिषु––– दृश्यते न प्रजासु।''

अत्र परिसंख्यालङ्कारमाध्यमेन महाकविना आर्यावर्तस्य कुशलशासनत्वं सर्वत्र सौख्यमपि अभिव्यञ्जितम्।

एवमेव निषधायाः कुशलशासनत्वं जनेषु सौहार्दं च प्रतिपादनाय महाकविना त्रिविक्रमभट्टेन परिसंख्यालङ्कारस्य विशिष्टः प्रयोगः कृतः–

''अव्ययभावोव्याकरणोपसर्गेषु न धनिनां धनेषु, दानविच्छित्तिरुन्माद्यत्करिकपोलमण्डलेषु, न त्यागिगृहेषु, भोगभङ्गो भुजङ्गेषु न विलासिलोकेषु, स्नेहक्षयो रजनीविरामविरमत्प्रदीपपात्रेषु, न प्रतिपन्नजनहृदयेषु।''

ISSN 2582-2616

महाकविरयं न केवलं श्लेष-परिसंख्याद्यलङ्कारनिबन्धने प्रवीणः, अपितु यमकादिचित्रकाव्येऽपि अस्य अप्रतिहतगतिः। यथा वर्षर्तुवर्णनप्रसङ्गे महाकविना यमकालङ्कारस्य छटा प्रदर्शिता-

**''धुतकदम्ब-कदम्बक-निष्पतन्-नव-पराग-परागम-मन्थराः।**
**हृत-तुषार-तुषा-रतिरागिणां प्रियतमा मरुतो मरुतो ववुः।।''**

इत्थं नलचम्पूः काव्ये सर्वत्रैव आलङ्कारिकप्रयोगाणां चमत्कृतिः दरीदृश्यते, येन काव्येऽस्मिन् आनन्दानुभूतिः संजायते। वस्तुतस्तु महाकविः त्रिविक्रमभट्टः सर्वत्रैव काव्ये अलङ्कारनिष्पादने एव संलग्नः वर्तते।

**त्रिविक्रमभट्टस्य न्यूनताः-**

विद्वत्समाजे यद्यपि त्रिविक्रमभट्टस्य महान् समादरो वर्तते तथापि समीक्षकाः त्रिविक्रमभट्टस्य न्यूनतामपि प्रदर्शयन्ति।

1. कविरत्र स्वपाण्डित्यप्रदर्शनाय विविधवर्णनम् आश्रयते तेन कथाप्रवाहः अवरुणद्धि। नलदमयन्तीकथायाः स्वल्पांश एव अत्र वर्तते।

2. शाब्दीक्रीडायाम् अलङ्कारप्रयोगे च मग्नोऽयं रसपरिपाकं न पश्यति। स्वाभाविकी गतिशीलताऽत्र नास्ति।

3. कथाऽपि अपूर्णा वर्तते। कथाविरामः समुचितस्थले न प्रतीयते। कथाविरामे सत्यपि पाठकानाम् उत्सुकता तिष्ठत्येव तेन रसभङ्गो भवति। एवमेव कथायाः विरामे दुःखानुभूतिः अपि अनौचित्यं प्रदर्शयति।

**समीक्षा-**

चम्पूकाव्यस्य स्वरूपं विकासपरम्परां च परिशील्य निष्कर्षेणेदं वक्तुं शक्यते यत् सगद्यपद्यमयीरचनैव चम्पूकाव्यं न भवति, अपितु तत्र उक्तिप्रत्युक्तिविष्कम्भकादीनामभावो नितरामावश्यकः, यतो हि रूपकेष्वपि गद्यपद्यमयीरचनायाः प्राप्तिर्भवति परञ्च तत्र संवादाः आवश्यकाः भवन्ति। एवमेव राजस्तुतिमाश्रित्य विरचिता गद्यपद्यमयीरचना चम्पूपदेन न व्यवह्रियते, सा तु विरुदमितिपदेन व्यवह्रियते तथैव विविधाभिः भाषाभिः सम्पृक्ता गद्यपद्यमयीरचना करम्भकमितिपदेनोच्यते। अस्यां चम्पूकाव्यपरम्परायाः प्रवर्तकः त्रिविक्रमभट्टः नलचम्पूकाव्यञ्च तत्र प्रथमं वर्तते। नलचम्पूकाव्यस्य परिशीलनेन प्रतीयते यद् त्रिविक्रमभट्टः नूतनविचारधारायाः कविरासीत्। त्रिविक्रमभट्टात् प्राक् संस्कृतवाङ्मये विशुद्धगद्यस्य पद्यस्य वा रचना भवति स्म। अनेन कविना मिश्रकाव्यस्य परिष्कृतं नूतनं स्वरूपं प्रादर्शि। वस्तुतः त्रिविक्रमभट्टस्य काव्येऽस्मिन् बाणभट्टस्य छाया स्पष्टतः दरीदृश्यते, यतोहि तेन आर्यावर्तप्रसङ्गे निषधाप्रसङ्गे च परिसंख्यायाः श्लेषस्य च बाहुल्येन प्रयोगं विधाय कादम्बरीकथायां वर्णितानां शूद्रकप्रसङ्गानामनुसरणमेव कृतम्।

## सन्दर्भग्रन्थसूची


1. आनन्दवर्धनः, ध्वन्यालोकः, लोचनसहितः सटिप्पणप्रकाशहिन्दीव्या-ख्योपेतश्च, हिन्दीटीकाकारः- आचार्यजगन्नाथपाठकः, चौखम्भाविद्या-भवनम्, वाराणसी, 2014
2. कविराजविश्वनाथः,साहित्यदर्पणः,सत्यव्रतसिंहकृतया विमर्शाख्य-हिन्दीव्याख्यया विभूषितः, प्रकाशकः - चौखम्भाविद्याभवनम्, वाराणसी, 1957
3. के.वी.रामकृष्णमाचार्यः, भाणवाङ्मयचरितम्, प्रकाशकः-संस्कृत-अकादमी, राष्ट्रियसंस्कृतसंस्थानेन मानिता आदर्शशोधसंस्था, उस्मानिया विश्वविद्यालयः, हैदराबाद, 2010
4. गोस्वामी तुलसीदास, रामचरितमानस, प्रकाशक-गीताप्रेस, गोरखपुर, पुनर्मुद्रितसंस्करण।
5. त्रिविक्रमभट्टः, नलचम्पूः विषमपदप्रकाशाख्यव्याख्ययाभावबो-धिन्याख्याटिप्पण्या च सहिता, सम्पादकः-श्रीनन्दकिशोरशर्मा, प्रकाशकः - चौखम्भासंस्कृतसीरीज-ऑफिस्, वाराणसी, 1989
6. त्रिविक्रमभट्टः, नलचम्पूः, विषमपदप्रकाशाख्यव्याख्यया सहिता, सम्पादकः हिन्दीव्याख्याकारश्च-कैलासपतित्रिपाठी, प्रकाशकः- चौखम्भासंस्कृतसंस्थानम्, वाराणसी, तृतीयं संस्करणम्, 1977
7. दण्डी, काव्यादर्शः, व्याख्याकारः श्रीरामचन्द्रमिश्रः, प्रकाशकः - चौखम्भाविद्याभवनम्, वाराणसी, 2016
8. पाणिनिः, अष्टाध्यायी, संस्कर्त्ता आचार्य श्रीसीतारामशास्त्री, प्रो. बालशास्त्री, प्रकाशकः-चौखम्भा सुरभारतीप्रकाशनम्, वाराणसी, 2015।
9. बाणभट्टः, कादम्बरी, व्याख्याकारः - पण्डितकृष्णमोहनशास्त्री, प्रकाशकः - चौखम्भासंस्कृतसंस्थानम्, वाराणसी, 1981
10. भोजः, चम्पूरामायणम्, रामचन्द्रबुधेन्द्रविरचितया व्याख्यया समेतम्, सम्पादकः-काशीनाथपाण्डुरङ्गः, प्रकाशकः-निर्णयसागरमुद्रणालयः, मुम्बई, 1898
11. भोजः, शृङ्गारप्रकाशः (प्रथमो खण्डः), सम्पादकः - वेङ्कटरामराघवन्, प्रकाशकः - हावर्डविश्वविद्यालयः, लन्दननगरम्, 1998
12. राधावल्लभ त्रिपाठी, संस्कृत साहित्य का समग्र इतिहास, प्रकाशक - चौखम्भा सुरभारती प्रकाशन, वाराणसी, 2020


## पादटिप्पणी

1. प्रवक्ता ( संस्कृत ) राजा हरपाल सिंह इण्टर कालेज सिंगरामऊ जौनपुर उ.प्र.
2. अष्टाध्यायी - 5.1.124
3. साहित्यदर्पणः, प्रथमः परिच्छेदः, कारिका - 2, पृष्ठम् - 2

ISSN 2582-2616

4. (क)प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।
काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते।। ध्वन्यालोकः. तृतीय: उद्योतः, कारिका – 41, पृष्ठम् – 525
(ख)काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यश्चेति द्विधा मतम्। साहित्यदर्पणः, चतुर्थः परिच्छेदः, कारिका – 1, पृष्ठम् – 279
5. साहित्यदर्पणः, षष्ठः परिच्छेदः, कारिका – 1-3, पृष्ठम् –359-361
6. श्रव्यं श्रोतव्यमात्रं तत् पद्यगद्यमयं द्विधा। साहित्यदर्पणः, षष्ठः परिच्छेदः, कारिका –312, पृष्ठम् – 546
7. द्रष्टव्यम् – साहित्यदर्पणः, षष्ठः परिच्छेदः, कारिका – 330-335 , पृष्ठम् – 555-557
8. द्रष्टव्यम्– साहित्यदर्पणः, षष्ठः परिच्छेदः, कारिका – 313-329, पृष्ठम् –547-555
9. द्रष्टव्यम् – साहित्यदर्पणः, षष्ठः परिच्छेदः, कारिका –336, पृष्ठम् – 558
10. नलचम्पूः, भावबोधिनीव्याख्या, उपोद्घातः, पृष्ठम् – 6
11. काव्यादर्शः, 1-31
12. शृङ्गारप्रकाशः, एकादशः प्रकाशः, पृष्ठम् – 726
13. चम्पूरामायणम्, बालकाण्डम्, पद्यम् – 3 पृष्ठम् – 4
14. साहित्यदर्पणः, षष्ठः परिच्छेदः, कारिका –336, पृष्ठम् – 558
15. आचार्य राधावल्लभत्रिपाठिविरचिते 'संस्कृत साहित्य का समग्र इतिहास' इति ग्रन्थस्य द्वितीये भागे 1106 पृष्ठे समुद्धृतमिदं लक्षणम्।
16. साहित्यदर्पणः, षष्ठः परिच्छेदः, कारिका –337, पृष्ठम् – 558
17. द्रष्टव्यम् – संस्कृत साहित्य का समग्र इतिहास, द्वितीयो भागः, पृष्ठम् – 1107।
अत्रेदं वक्तव्यम् – डॉ. छविनाथत्रिपाठिमहाभागैः 'चम्पू काव्य का आलोचनात्मक एवं ऐतिहासिक अध्ययन इति ग्रन्थे 251 तमे पृष्ठे चम्पूकाव्यानां संख्या 245 इति प्रदत्ता। अस्योल्लेखः नलचम्पूग्रन्थस्य भूमिकाभागे कैलासपतित्रिपाठिना 25 तमे पृष्ठे कृतः।
18. (क) तेषां वंश्ये विशदयशसां श्रीधरस्यात्मजोऽभूद्
देवादित्यः (नेमादित्यः) स्वमतिविकसद्वेदविद्याविवेकः। ( नलचम्पूः 1/19 )
(ख)तैस्तैरात्मगुणैर्येन त्रिलोक्यास्तिलकायितम्।
तस्मादपि सुतो जातो जाड्यपात्रं त्रिविक्रमः। ( नलचम्पूः, 1/20 )
19. द्रष्टव्यम्, भाणवाङ्मयचरितम् इति ग्रन्थः, पृ. 86. रचयिता के.वी.रामकृष्णमाचार्यः।
20. नलचम्पूः, 6/4
21. शश्वद्बाणद्वितीयेन नमदाकारधारिणा।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः।।( नलचम्पूः, 1/14 )
22. पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम्।
हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी।। ( नलचम्पूः, 6/29 )
23. गुर्जरप्रदेशे प्राप्तम् कुरुण्डकताम्रपत्रम्।
24. द्रष्टव्यम्– नलचम्पूः, भूमिका, पृ. 18 कैलासपतित्रिपाठी,
25. नलचम्पूः, 1/11
26. रामचरितमानस, बालकाण्ड, 14(घ)
27. नलचम्पूः, 1/12-14
28. नलचम्पूः, 1/4
29. नलचम्पूः, 1/16
30. नलचम्पूः. प्रथमोच्छ्वासः, पृष्ठम् – 30
31. नलचम्पूः, 1/26, 30
32. नलचम्पूः, द्वितीयोच्छ्वासः, पृष्ठम् – 88
33. नलचम्पूः, द्वितीयोच्छ्वासः, पृष्ठम् – 102
34. यस्मिश्च राजनि जितजगति परिपालयति महीं चित्रकर्म वर्णसङ्कराः, रतेषु केशग्रहाः, काव्येषु दृढबन्धाः, शास्त्रेषु चिन्ताः, स्वप्नेषु विप्रलम्भाः, छत्रेषु कनकदण्डाः, ध्वजेषु प्रकम्पाः, गीतेषु रागविलसितानि, करिषु मदविकाराः, चापेषु गुणच्छेदाः, गवाक्षेषु जालमार्गाः, शशिकृपाणकवचेषु कलङ्काः, रतिकलहेषु दूतसम्प्रेषणानि, सार्यक्षेषु शून्यगृहाः न प्रजानामासन्। (कादम्बरी, कथामुखम्, शूद्रकवर्णनम्, पृष्ठम् – 15-16)
35. "सारः सकलसंसारचक्रस्य, शरण्यः पुण्यकारिणाम्, धाम धर्मस्य, आस्पदं सम्पदाम्, आश्रयः श्रेयसाम्, आकरः साधुव्यवहाररत्नानाम्, आर्यावर्तो देशः"।(नलचम्पूः. प्रथमोच्छ्वासः, पृष्ठम् – 17-18)
36. नलचम्पूः, प्रथमोच्छ्वासः, पृष्ठम् – 16
37. नलचम्पूः, प्रथमोच्छ्वासः, पृष्ठम् – 31-32
38. नलचम्पूः, 1/43

ISSN 2582-2616

# शाकल्यमल्लीयोदारराघवमहाकाव्ये व्याकरणसम्बद्धप्रयोगाणां योगदानम्

**निशी बाला**

महाकविशाकल्यमल्लप्रणीतमुदारराघवमहाकाव्यं रामायणाधारितमेकमुत्कृष्टं महाकाव्यमस्ति। महाकविः न केवलं काव्यशास्त्रस्यापितु विविधशास्त्राणां सारविद् मनीषी आसीत्। अस्मिन् उदारराघवमहाकाव्ये प्रतिपदं व्याकरणसम्बद्धप्रयोगाणां सुन्दरं वर्णनं दृश्यते।

उदारराघवमहाकाव्यं साहित्यविद्यायाः ग्रन्थः विद्यते । साहित्यविषये बुधैः व्युत्पाद्यते यत्–सहितस्य भावः साहित्यम् इति । अस्याः व्युत्पत्तेः तात्पर्योऽयं वर्तते यत् सर्वशास्त्रेषु येषामपि तत्त्वानां चिन्तनं प्राप्यते तस्य प्रयोगः साहित्यशास्त्रेणैव निश्चयीक्रियते । विद्वद्भिः स्वीक्रियते यत् वेदार्थतत्त्वस्य ज्ञानार्थं बोधनार्थं वा शिक्षाव्याकरणादिषड्दर्शनानां ज्ञानमपेक्षितं वर्तते । तद्वदेव काव्यशास्त्रेऽपि कवेर्सृष्टौ शिक्षाव्याकरणादिनाम्महत्यावश्यकता वर्तते।

महाकाव्ये कानिचित् व्याकरणप्रयोगोदाहरणानि–

**वनैचरैर्वागुरकैः किरातैः कर्णावतंसीकृतकिङ्किरातैः।**
**विशोधितुं गाढमगाढदावं धन्वी तमन्वीयुरथाश्ववाराः॥**

इत्यत्र किरातैः वनैचरैः इत्यादिनामकारान्त शब्दानां तृतीया विभक्ति बहुवचने किरातशब्दात्, वनेचरशब्दात् चेत्यादिषु सर्वप्रथमम् अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन सूत्रेण प्रातिपदिकसंज्ञायां प्रत्ययः , परश्च ,ङ्याप्प्रातिपदिकात् चेति सूत्रसहकारेण,स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यसङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इत्यनेन सूत्रेण भिस् प्रत्यय, अतो भिस् ऐस् इत्यनेन सूत्रेण ऐसादेशे, सस्य रूत्वे विसर्गे कृते सत्ति किरातैः वनैचरैः इत्यादीनि रूपाणि सिद्धिर्भवति

**पुण्याहमावाच्य पुरोहितौघं दाक्षिण्यमाराधय दक्षिणाभिः।**
**करोति तातस्तव सर्वयत्नं राज्याभिषेके रघुवंशरत्न ॥**

रघुवंशरत्न इति पदे रघुवंशस्य रत्न इति लौकिके तथा रघुवंश+ङस्+रत्न+सुषष्ठी इत्यनेन समासे कृत्तद्धितसमासाश्च इत्यने सूत्रेण प्रातिपदिकसंज्ञा,सुपोधातुप्रातिपदिकयोः इत्यने सूत्रेण सुपो लुक्, सुपतिङन्तं पदं इत्यनेन सूत्रेण पदसंज्ञा, स्वविभक्तिकार्ये सति रघुवंशरत्नं रूपस्य सिद्धिर्भवति।

**साक्षाद्भुक्षः ककुदि स्थितः सन्नुक्षाकृतेरक्षितगतान्निहत्य ।**
**ककुत्स्थनामा नृप इन्द्रवाहस्तामध्यवात्सीत् कुलराजधानीम् ।।**

इत्यत्र स्थितः इति पदे ष्ठा धातोः अतिष्ठतित्यर्थे,गत्यर्थाकर्मकलिषशीस्थाऽऽसवसजनरुहजीर्यतिभ्यश्च इत्यनेन सूत्रेण त प्रत्ययकृते, अनुबन्धलोपः, आतोलोप इटि च इत्यनेन सूत्रेण आलोपे कृते, तद् बाधित्वा, द्यतिस्यतिमास्थामित्ति किति' इत्यने सूत्रेण आत्वस्य इत्वे कृते पुलिङ्गे प्रथमैकवचने स्थितः इति रूपं सिद्धयति।

**एतस्मिन्नवसर एव वासवाद्याः पौलस्त्यप्रतिहतचेतसो विहस्ताः।**
**क्षीरब्धौ हरिमनुकम्पिनं निलिम्पाः साकम्पाः शरणमगुः प्रणम्य दीनाः।।**

इत्यत्र पौलस्त्य इति पदे अपत्यपुमान् अथवा पुलस्त्यस्य अपत्यं पुमान् इत्यर्थे गर्गादिभ्यो यञ् इत्यनेन सूत्रेण यञ् प्रत्ययकृते, अनुबन्धलोपे, तद्धितेष्वचमादेः इत्यनेन सूत्रेणादिवृद्धौकृते सति पौलस्त्य इति रूपं सिद्धयति।

**प्रागात्मसृष्टेः सलिले शयानो नारायणाख्यः स हिरण्यगर्भः।**
**अजश्च नाभावरविन्दजन्मा यस्य स्वयंभूरिति संबभूव।**

इत्यत्र बभूव इति पदे भूधातोः परोक्षे लिट् इत्यनेन सूत्रेण लिट् लकारे, अनुबन्धलोपे, तिप्तस्झिसिप्थस्थमिप्वस्म–स्तातांझथासाथांध्वमिड्वहिमहिङ्' इत्यनेन सूत्रेण तिप्प्रत्ययकृते,परस्मैपदानां णल्तुसुस्थल्थुसणल्वमाः इत्यनेन सूत्रेण णलादेशे, अनुबन्धलोपे, भुवोवुग्लुङ्लिटोः इत्यनेन सूत्रेण वुगागमे, अनुबन्धलोपे,लिटिधातोरनभ्यास्य इत्यनेन सूत्रेण द्वित्वेकृते, पूर्वोऽभ्यासः इत्यनेन सूत्रेण अभ्याससंज्ञाकृते, हलादिः शेषः इत्यनेन सूत्रेण आदिहल् शेषे, ह्रस्वः इत्यनेन सूत्रेण ह्रस्वकृते,भवतेरः इत्यनेन सूत्रेण उकारस्थाने अकारकृते,अभ्यासे चर्च इत्यनेन सूत्रेण चरत्वे कृते सति बभूव इति रूपं सिद्धयति।

**जाल्मौ स्थो जगति वशिष्ठवामदेवौ मा धर्मं त्यजतमशोकधर्मपालौ।**
**मा रामं नय विपिनं सुमन्त्र यन्तर्व्यक्रुक्षन्निति विपणौ विलुप्य पौराः।।**

इत्यत्र मा धर्मं त्यजतमशोकधर्मपालौ, मा रामं नय विपिनं सुमन्त्र इति अव्ययपदे, स्वरादिनिपातमव्ययम् इत्यनेन सूत्रेण अव्ययसंज्ञाकृते कृत्तद्धितसमासाश्च इत्यनेन सूत्रेण प्रादिपदिकसंज्ञा, स्वौजस्–इत्यादि सूत्रेण सुप्रत्यये कृते, अव्ययादाप्सुपः इत्यनेन सूत्रेण सुपो लुक् कृते मा रूपं सिद्धयति।

अतः निष्कर्षाधारेण कथयितुं शक्यते यत् शाकल्यमल्लमहाकाव्ये एतादृशानि बहूनि पद्यानि सन्ति यत्र व्याकरणसम्बद्धप्रयोगाणामुदाहरणं प्रचुरतया वर्णनं प्राप्यते।

## पादटिप्पणी

1. उदारराघवमहाकाव्यम् श्लोक सं.-1/36
2. पाणिनि अष्टाध्यायी - 1/2/45
3. पाणिनि अष्टाध्यायी - 3/1/1
4. पाणिनि अष्टाध्यायी - 3/1/2
5. पाणिनि अष्टाध्यायी - 4/1/1
6. पाणिनि अष्टाध्यायी - 4/1/2
7. पाणिनि अष्टाध्यायी - 7/1/9
8. उदारराघवमहाकाव्यम् श्लोक सं. - 4/13
9. पाणिनि अष्टाध्यायी - 2/2/8
10. पाणिनि अष्टाध्यायी - 1/2/46
11. पाणिनि अष्टाध्यायी - 2/4/71
12. पाणिनि अष्टाध्यायी - 1/4/14
13. उदारराघवमहाकाव्यम् श्लोक सं. -1/14
14. पाणिनि अष्टाध्यायी - 3/4/72
15. पाणिनि अष्टाध्यायी - 6/4/64
16. पाणिनि अष्टाध्यायी - 7/4/40
17. उदारराघवमहाकाव्यम् श्लोक सं. - 2/18
18. पाणिनि अष्टाध्यायी - 4/1/104
19. पाणिनि अष्टाध्यायी - 7/2/117
20. उदारराघवमहाकाव्यम् श्लोक सं. - 1/4
21. पाणिनि अष्टाध्यायी - 3/2/115
22. पाणिनि अष्टाध्यायी - 3/4/78
23. पाणिनि अष्टाध्यायी - 3/4/812
24. पाणिनि अष्टाध्यायी - 6/4/88
25. पाणिनि अष्टाध्यायी - 6/1/8
26. पाणिनि अष्टाध्यायी - 6/1/4
27. पाणिनि अष्टाध्यायी - 7/4/60
28. पाणिनि अष्टाध्यायी - 7/4/59
29. पाणिनि अष्टाध्यायी - 7/4/73
30. पाणिनि अष्टाध्यायी - 8/4/54
31. उदारराघवमहाकाव्यम् श्लोक सं. - 5/106
32. पाणिनि अष्टाध्यायी - 1/1/37
33. पाणिनि अष्टाध्यायी - 2/4/82

## सन्दर्भग्रन्थ सूची

1. उदारराघवमहाकाव्यम्-शाकल्यमल्लविरचित, सम्पादकः टी. वेंकटाचार्य, प्रकाशन ह्द्धद्द ड्डस्न4ड्डह्न द्यद्बड्डह्नड्डह्4 ड्डठ्ठस्र ह्द्दह्यद्दड्डह्नष्द्ध ष्द्गठ्ठह्लद्दह्न स्रड्डस्रह्नड्डह्य.
2. पाणिनि अष्टाध्यायी-सम्पादकः श्रीगोपालदत्तपाण्डेयः, चौखम्बा सुरभारती प्रकाशन वाराणसी, संस्करण 2017

*शोधछात्रा ( व्याकरण विभाग )*
*केन्द्रीयसंस्कृतविश्वविद्यालय वेदव्यास परिसर बलाहर ( हि. प्रदेश )*

ISSN 2582-2616

# रत्नावल्यां समाहितानाम् अलङ्काराणां विवेचनम्

**देवेन्द्रप्रसादः**

रत्नावलीनाटिकेति एकं सहजश्रद्धाभावेन निस्सृतहार्दिकभावानां निबन्धनमस्ति। अतः अस्यां नाटिकायां प्रयत्नपूर्वकं किमपि न समावेशितम्। तथापि उत्तमं काव्यमिदम्। उत्तमकाव्यस्य सर्वाणि तत्त्वानि अत्र सहजरूपेण समाहितानि सन्ति। उत्तमकाव्यतत्त्वेषु अलङ्काराः अपि सहजतया प्रयुक्ताःस्युः न तु प्रयत्नसाध्याः। प्रयत्नसाध्यालङ्कारे तु काव्यं चित्रकाव्यं किं वा अधमकाव्यं भवति। किन्तु अस्मिन् काव्ये तु सहजतया यत्र कुत्रचित्रापि अलङ्काराः उत्तमरूपेण आगताः सन्ति। काव्ये समाहितालङ्काराणां विवेचनात् पूर्वं किञ्चित् प्रस्तावनारूपेण अलङ्कारः कः ? किं च तस्य स्वरूपमिति पूर्वाचार्याणाम् अभिमतं प्रस्तूयते–

वस्तुतः साहित्येऽलङ्कारस्य प्रयोगः अतिप्राचीनोऽस्ति। प्राचीनतमेसाहित्ये ऋग्वेदे उपमादीनाम् अलङ्काराणां रमणीयप्रयोगाः सन्ति। निरुक्तेऽपि उपमायाः लक्षणं भेदाः उपमावाचकाः शब्दाश्च निरूपिताः सन्ति। भरतमुनिः नाट्यशास्त्रे उपमारूपकदीपकयमकादिसञ्ज्ञकानां चतुर्णामलङ्काराणां वर्णनमकरोत्। संस्कृतजगति भामहः एव सर्वप्रथममलङ्काराणां व्यवस्थितरूपेण निरूपणं कृत्वा अलङ्काराणां काव्यत्वमुपस्थापितवान् तथा च अलङ्कारसम्प्रदायः साहित्यशास्त्रे स्थापितवान्। सः नाट्यशास्त्रकारस्य भरतमुनेः निरूपितानां रसादितत्त्वानामलङ्कारेषु अन्तर्भावं कृत्वा रसवदादीनामलङ्काराणां निरूपणं कृतवान्।

**अलङ्कारशब्दस्यार्थः**–व्याकरणदृष्ट्या अलङ्करोतीति अलङ्कारः अथवा अलङ्क्रियते अनेनेति अलङ्कारः इति व्याख्यायते। एवम् उभयविधव्याख्यया अलङ्करणसाधनरूपेण व्यवस्थापितः। अलङ्कारः कः ? काव्यशास्त्रे काव्ये वा अलङ्काराः के ? इति प्रतिपादयित्सवः अनेके आचार्याः अनेकप्रकारेण अलङ्कारस्य लक्षणं प्रतिपादितवन्तः। तत्र प्रथमं भामहमतमुपस्थाप्यते–

**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः**[1] **वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते।**[2]

**सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते। यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥**[3]

अत्र भामहकृत–अलङ्कारलक्षणे वक्रोक्त्या प्राधान्यलङ्कारे इति प्रतिपादितम्।

**दण्डीकृतालङ्कारलक्षणम्–**

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**[4]

मम्मटकृतालङ्कारलक्षणम्–

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥**[5]

पण्डितजगन्नाथकृतम् अलङ्कारलक्षणनिरूपणम्–

**काव्यात्मनो व्यङ्ग्यस्य रमणीयता प्रयोजका अलङ्काराः।**[6]

अलङ्काराणां विकासः वेदेभ्यः एव जातः। वेदेषु उपमोत्प्रेक्षानुप्रासादयः अलङ्काराः सन्ति। भरतमुनिना चत्वारः एवालङ्काराः स्वनाट्यशास्त्रे प्रतिपादिताःसन्ति।

रत्नावल्यां नाटिकायाम् उपमायाः यत्र प्रयोगः कृतः ते श्लोका उदाह्रियन्ते तत्र कथमुपमेति विवेच्यते—

उपमायाः उदाहरणम्–

**उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम्।**
**परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी।।**[7]

श्लोकोऽयं रत्नावल्याः प्रथमाङ्कस्य मदनमहोत्सवप्रसङ्गे राजा उदयनस्य वासवदत्तया कृतायाः पूजाकालस्य अस्ति। अत्र राजा उदयनः वासवदत्तां प्रति वदति। यद्देवि पश्य विरहहेतुना पीतमुखेन हृदयप्रदेशस्थितं पतिं वेदयन्त्याः युवत्याः इव एषा पूर्वदिशा उदयदयाचलप्रदेशस्थितं दिशायाः पतिं चन्द्रं सूचयति इति। अत्र उपमायाः सर्वाण्यपि अङ्गानि विराजन्ते। यथा– यत्र उपमान–उपमेय–समानधर्म–वाचकपदेत्यादीनि चत्वारि अङ्गानि प्राप्यन्ते तत्र पूर्णोपमा भवति। प्रकृतस्थले युवतिः उपमानं वर्तते, पूर्वदिशा उपमेयोऽस्ति पतिरूपधर्मसामान्यधर्मोऽस्ति यः

युवत्याः हृदयप्रदेशे तिष्ठति तथा सैव पतिरूपधर्मः पूर्व दिशायाः हृदयरूपे उदयाचले तिष्ठति, चतुर्थम् अङ्गं विद्यते उपमायाः वाचकशब्दः इवादि सोऽपि अत्र अस्ति। अतः स्थलेऽस्मिन् पूर्णोपमा विद्यते।

अपि–

**कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्।**
**आभाति मकरकेतोः पार्श्वस्तथा चापयष्टिरिव।।**[8]

अत्र राज्ञः उदयनस्य विदूषकं प्रति उक्तिरस्ति। राजा उदयनः वासवदत्तां दृष्टवा तस्याः स्वरूपस्य अवस्थायाः वर्णनं करोति। सा वासवदत्ता सुमनानामिव सुकुमारमूर्तिः व्रतोपवासादिकारणेन क्षीणमध्यभागवती, कामदेवस्य समीपस्थिता धनुर्लता इव भासते इति अत्रापि उपमायाः सर्वाण्यपि अङ्गानि वर्तन्ते। अतः अत्रापि पूर्णोपमा अलङ्कारः विद्यते।

उत्प्रेक्षालङ्कारस्य रत्नावल्यामुदाहरणम्–

**स्पृष्टस्त्वयैष दयिते स्मरपूजाव्यापृतेन हस्तेन।**
**उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः।।**[9]

श्लोकोऽयं रत्नावल्याः प्रथमाङ्कस्य मदनमहोत्सवस्य प्रसङ्गस्य अस्ति। अत्र राजा उदयनः वासवदत्तां (स्वराज्ञीं) प्रति कथयति यत् देवि! भवत्याः मकरकेतुपूजायां हस्तेन स्पृष्टोऽयम् अशोकवृक्षः प्रकटीभूतस्य अन्यमृदुतरनूतनपल्लवस्य इव प्रतीयते। अत्र उत्कटकोटिका सम्भावना कृता वर्तते। अतः अत्र उत्प्रेक्षालङ्कारो विद्यते।

**रूपकालङ्कारस्य रत्नावल्यामुदाहरणम्–**

**श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।**
**कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः।।**[10]

भावार्थः–श्लोकोऽयं रत्नावल्याः द्वितीयाङ्कस्य अस्ति,अत्र राजा उदयनः विदूषकं प्रति रत्नावल्याः (सागरिकायाः) शरीरसौन्दर्यस्य वर्णनं कुर्वन् कथयति यत् हे वयस्य! इयं (सागरिका =रत्नावली) लक्ष्मी अस्ति इति सत्यम्। अस्याः हस्तोऽपि पारिजातस्य किसलयोऽस्ति। यदि एतन्नास्ति, तर्हि स्वेदव्याजेन अमृतद्रवः कुतः क्षरति इति। यत्र स्पष्टरूपेण उपमानोपमेययोः उल्लेखो भवति। किन्तु यत्र उपमेयः उपमानरूपेण प्रस्तूयते तत्र रूपको भवति। अतः प्रकृतस्थले उपमेयरूपसागरिकायाः लक्ष्मीरूप–उपमानेन सह अभेदसंस्थाप्य उपमेयः उपमानरूपेण कविना प्रस्तूयते इति। अतोऽत्र रूपकालङ्कारो राजते।

**समासोक्त्यलङ्कारस्य रत्नावल्यामुदाहरणम्–**

**यातोऽस्मि पद्मनयने समयो ममैष, सुप्ता मयैव भवती प्रतिबोधनीया।**
**प्रत्यायनामयमितीव सरोरुहिण्याः, सूर्योऽस्तमस्तकनिविष्टकरः करोति॥**[11]

पद्येऽस्मिन् कमलिन्याः नायिकारूपे तथा सूर्यस्य नायकरूपे आरोपः कृतो विद्यते अतोऽत्र समासोक्तिरलङ्कारो विद्यते।

**दृष्टान्तालङ्कारस्य रत्नावल्यामुदाहरणम्–**

**तीव्रः स्मरसंतापो न तथादौ बाधते यथासन्ने।**
**तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः॥**[12]

अत्र उग्रकामसन्ताप–कालीनस्य मनसः पीडितावस्थायाः समागम–कालीनस्य वर्षाकालस्य मनसः दृष्टान्तस्य कथनात् दृष्टान्तनामकोऽलङ्कारोऽस्ति।

**प्रतीपालङ्कारस्य रत्नावल्यामुदाहरणम्–**

**कि पद्मस्य रुचं न हन्ति नयनानन्दं विधत्ते न किं, वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्।**
**वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो, दर्पः स्यादमृतेन चेदिह तदप्येवास्ति बिम्बाधरे॥**[13]

अत्र मुखरूपोपमेयस्य कमलरूपोपमानस्य रूपे कथनं विद्यते अतः प्रतीपालङ्कारो राजते।

ISSN 2582-2616

**असङ्गतिरलङ्कारस्य रत्नावल्यामुदाहरणम् –**

**मम कण्ठगताः प्राणाः पाशे कण्ठगते तव।**

**अतः स्वार्थं प्रयत्नोऽयं त्यज्यतां साहसं प्रिये॥**[14]

अत्र कार्यकारणयोः भिन्नदेशतयोर्निबन्धनादसङ्गतिरलङ्कारो वर्तते।

परिकरालङ्कारस्य रत्नावल्यामुदाहरणम्–

**प्रणमत चरणाविन्द्रस्येन्द्रजालकपिनद्धनाम्नः।**

**तथैव शम्बरस्य मायासुप्रतिष्ठितयशसः॥**[15]

अत्र उक्तानि वाक्यानि विशेषणाभिप्रायविशेषेण प्रयुक्तानि सन्ति अतः अत्र परिकरनामकोऽलङ्कारो विद्यते।

**विरोधाभासालङ्कारस्य रत्नावल्यामुदाहरणम्–**

**किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः।**

**मध्याह्ने प्रदोषो दर्शयतां दह्याज्ञसिम्॥**[16]

अत्र पृथिव्यां चन्द्रस्य दर्शनरूपविरोधस्य कथनादत्र विरोधाभासालङ्कारो विद्यते।

## सन्दर्भग्रन्थाः


1. काव्यालङ्कारः
2. काव्यादर्शः
3. रसगङ्गाधरः
4. रत्नावली
5. काव्यप्रकाशः


## पादटिप्पणी

1. काव्यालङ्कारः 1.36
2. काव्यालङ्कारः– 5.66
3. काव्यालङ्कारः– 2.85
4. काव्यादर्शः– 2.1
5. काव्यप्रकाशः– 8.67
6. रसगङ्गाधरः पृ. सं. – 248
7. रत्नावली 1.24
8. रत्नावली 1.19
9. रत्नावली 1.21
10. रत्नावली 2.18
11. रत्नावली 3.6
12. रत्नावली 3.10
13. रत्नावली 3.13
14. रत्नावली 3.16
15. रत्नावली 4.7
16. रत्नावली 4.8


*शोधच्छात्रः*

*केन्द्रीयसंस्कृतसंस्कृतविश्वविद्यालयः ( श्रीरघुनाथकीर्तिपरिसरः )*

ISSN 2582-2616

# भारतीयवास्तुविद्यायाः विकासकालक्रमः क्षेत्रञ्च - एकमवलोकन

श्री रिपुदमनचन्द्रः

**संक्षिप्तसार-**

अतीवप्राचीनविद्यारूपेण परिगणिता वास्तुविद्या व्यापकदृष्टिकोण समन्विता वर्तते। अस्या उत्पत्तिर्व्यापारे सविशदं ज्ञानं पुराणेभ्यो सम्प्राप्यते। ऋग्वेदादस्य सिद्धान्तस्य तथ्यानि लभ्यन्ते। तेन साकं 'वास्तु' पदस्य अर्थोऽपि 'अमरकोशनामधेये प्रसिद्ध संस्कृतबृहच्छब्दकोशे गृहनिर्माणप्रसङ्गत्वेन प्रदीयते। संस्कृतवाङ्मये वास्तुविद्याया अनेकानि शास्त्राणि संलक्ष्यन्ते यानि अद्यापि विविधसंस्कृतविश्वविद्यालयेषु पाठ्यन्ते। वास्तुविद्यायाः शैली अपि दक्षिण-उत्तरभेदेन द्विधा परिलक्ष्यते तदनुगुणं स्थानविशेषानुसारं तदाकृतिरपि विविधात्मिका भवति। वास्तुशास्त्रदिशा वास्तुप्रासादः, भवनं, राजसभागारः प्रभृतीनां निर्माणशैल्यां भिन्नता परिलक्ष्यते।

**भूमिकाः-**

वास्तुपुरुषस्य प्रादुर्भावः-वास्तुविद्या स्वतः व्यापकदृष्टिकोण समाह्यिन्त्यस्ति। एषा यथा अतीव प्राचीनास्ति तथैव समृद्धशास्त्रैरपि ओतःप्रोतास्ति। वास्तु एकतमं विज्ञानं वर्तते यत्र सिद्धान्त-अनुसन्धान-परीक्षणादीनां सुव्यवस्थितं क्रमबद्धरूपम् अध्ययनं प्रचलति। सर्वादौ वास्तु इत्यस्य कोऽर्थः कथं वा तस्य प्रादुर्भावाभवत्, तस्योपरि आलोकपातं क्रियते । वास्तुविद्यायाः प्रादुर्भावविषये मत्स्यपुराणे प्राप्यतेऽवं यद्, यदा भगवान् शङ्कर अन्धकासुरवधाय विराटरूपधारणं कृत्वा युद्धं कुर्वनासीत् तदा तदीयललाटाद् स्वेदविन्दव अपतन् तेभ्यश्च भीषणाद्धुताननयुतः प्राणी प्रादुर्भवत्। तद्यथा-

> **''ललाटस्वेद्सलिलमपतद् भुवि भोषणम्।**
> **करलवादनं तस्माद भूतमुदभूत मुल्बणम्॥''[1]**

तदा एवं प्रतीयते स्म यद् सप्तद्वीपान्, वसुन्धराम् आकाशञ्च सो भक्षयिष्यति। ततश्च, स अन्धकानां शोणितपानं कर्तुं प्रारब्धवान् तेन तस्य क्षुधानिवारणं न जातमित्यस्मात् कारणाद् सो शङ्करस्य सम्मुखे त्रिलोक भक्षणार्थं घोरं तपस्यामकरोत्। फलतो शङ्कराद् बरदानमवाप्य त्रिलोकभक्षणाय उद्यतोऽभवत्। तदृष्ट्वा देवताः ब्रह्मा-शिव-दानव-दैत्य-राक्षसाः तम्, एकस्मिन् स्थाने स्थिरमकुर्वन्।

तस्मिन् काले यो यः तस्य देहं यस्मिन् यस्मिन् स्थाने आक्रान्तम् अकुर्वन् सः तेषु तेषु स्थानेष्वैव निवासं कर्तुं प्रारब्धवान्। अनेन सो सकलदेवतासु निवासं करोतीत्यस्माद् वास्तु नाम्ना प्रकीर्तितः तथाहि पुराणे-

> **''येन यत्रैव चक्रान्तं स तत्रैवावसत् पुनः।**
> **निवासात् सर्वदेवानां वास्तुरित्यभिधीयते।।''[2]**

इत्थं, बृहद्वास्तुमालाकारः पण्डितरामनिहोरद्विवेदी स्वग्रन्थेऽपि वास्तुपुरुषस्वरूषविषये भणति यत्, सत्ययुगस्य प्रारम्भे एको महान् प्राणी उत्पन्नो जातो यश्च 14 भुवनानि स्वविशालदेहेन व्यापृतवान्, तं दृष्ट्वा भयभीताः कुद्धाश्च देवराज इन्द्रः देवताश्च तं धृत्वा तस्य मस्तकं भूमौ स्थिरमकुर्वन् स्वयं ते अतिष्ठन् तत्र । अस्य एव नाम भगवान् ब्रह्मा ''वास्तुपुरुष'' इत्यनेनोद्घोषितवान्। यथा-

> **''पुरा कृतयुगे यासीन्महद्भूतं समुत्थितम्।**
> **आप्यमानं शरीरण सकल भवनं ततः॥**
> **तव दृष्टा विस्मयं देवा गताः सेन्द्रा भयवृताः।**
> **ततस्तैः क्रोधसन्तप्तैरगृहीत्वा तमयासुराम्॥**
> **विनिक्षिप्तमधोवततं स्थितास्तत्रैव ते सुराः।**
> **तमेव वास्तुपुरुष ब्रह्मा कल्पितवान् स्वयम्॥''[3]**

**विषयप्रवेशः-**

वास्तुशब्दस्यार्थः - यदा कश्चनः 'वास्तु' पदस्य श्रवणं करोति तदा सः तस्यार्थं ज्ञातुमिष्टकामो भवति। 'वास्तु' इति पदं संस्कृतस्य 'वस्' धातुतो निष्पन्नं जातम् अस्यार्थोऽस्ति वसति, निवसति, जीवति इति। एतदवसरे प्राप्यतेऽवम्-''वसन्ति प्राणिनो यत्र''[4] अर्थात्, यत्र प्राणिनो सुष्ठुतया निवासं कुर्वन्ति तद्स्थानं वास्तु इति।

वास्तु पदस्य एवम्बिधार्थो भवति चेद्वयं तर्हि वक्तुं शक्नुमो यद्

जलचराणां कृते योग्यजलीयस्थानं तेषां वास्तु, विहगानां कृते यथायोग्यः नी ?: तेषां वास्तु इति। परं प्रकीर्णसंस्कृतशब्दकोश, अमरकोशे उल्लिखते यद्, गृहनिर्माणाय या भूमि नियता भवति सा एव वास्तुनामधेयास्ति।[5]

तद्वत्, शब्दार्थचिन्तामणिनामके कोशग्रन्येऽपि उच्यते यत्, 'वासयोग्या भूमिः, गृहनिर्माणयोग्या भूमिरेव वास्तुशब्दस्यार्थोऽस्ति। वास्तुसिद्धान्तस्योल्लेखो सर्वादौ ऋग्वेदस्य 'वास्तोष्पति'नामके सूक्ते जायते। ऋग्वेदस्य कतिपयेषु मन्त्रेषु वास्तोष्पतिदेवस्य नामोल्लेखपूर्वकं गृहनिर्माणात्पूर्वं तस्य आराधना करणीया इति संलक्ष्यते। यथा-'वास्तोष्पते' इत्यनेन सम्बोधनेन प्राप्तो मन्त्रः-

**''वास्तोष्पते प्रति जनिह्यस्मान्त्स्ववेशो अनमीव भवा नः।**

**यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे।।''**[6]

अत्र वास्तोष्पतिदेवतां प्रति आवासस्थल सुष्ठु भवतु, रोगनिरामयको भवतु, सर्वेष्टप्रदाता भवतु, द्विपदानां पुत्रपौत्रादीनां चतुष्पदानां गवादीना पश्वादीनां कल्याणकारी भवतु इति प्रार्थना क्रियते। वेदस्य एकस्मिन् मन्त्रे व्याख्यानप्रसङ्गे वास्तोष्पतिः, इन्द्रः त्वष्टा च एते एक एव सन्ति इत्युच्यते। ऋग्वेदे वास्तुपदस्य वर्णनं भवननिमित्तं गृहनिमित्तं वा प्राप्यते। यथा-

**''ता वां वास्तुन्युश्मसी गमध्यै''**[7]

अनेन बहुधा वास्तु शब्दस्यार्थः प्रतिपाद्यते। वास्तु अर्थात्, भवननिर्माणशास्त्राणि प्रासादनिर्माणशास्त्राणि वास्तुशास्त्रमित्यभिधीयते। भारतीयशास्त्रपरम्परायां वास्तुशास्त्रम् ऋषीणां मनीषीणाञ्च अद्वितीयज्ञानकोषत्वेन भजते।

वास्तुक्षेत्रम्-वास्तुशास्त्रमस्मान् आकांक्षा- वास्तविकतानुरूपं जीवितुं प्रेरयति। वास्तुसम्बन्धितं शास्त्रमेवास्ति वास्तुशास्त्रम्। 'वास्तु' इत्यस्य तात्पर्यं केवलं साधारणजनानां निवासयोग्यं स्थानमित्यनेन नास्ति अपितु सनातनधर्मरक्षणाय देवतानां कृते मन्दिरप्रासादानां निर्माणमपि जीवनस्य महत्वपूर्णाङ्गो भवति। एतासां क्रियाणां विधानमपि निर्दिष्टमस्ति। भवन-प्रासाद-राज- प्रासाद-ग्राम-पुर-रथ्या-मार्ग-प्रकार-देवालय-मण्डप-यज्ञवेदी- सभागृह-कूप-वापी-स्तुपादीनां निर्माणक्रियाया सिद्धान्तो यत्र निर्धारितोऽस्ति तन्नाम वास्तुशास्त्रमिति। महाराजाभोजेन प्रणीते समराङ्गणसूत्रधारग्रन्थे उच्यते यद्, सम्पूर्ण विधिविधानद्वारा उत्तमरीत्या च निर्मितेन गृहेन भवनेन वा सुख-सम्पत्तिर्बुद्धि-सन्तान-मानसिकशान्त्यादयो लभन्ते । तत्रत्याः निवासिनो सदा ऋणमुक्ता भवन्ति।[8]

वास्तुशास्त्रकारेषु विश्वकर्मा मयदानवश्च प्रमुखौ स्तः। भारते मुख्यत उत्तर-दक्षिणभेदत्वाद् शैलीद्वयं वर्तते। द्वयोर्मध्ये भूयं पार्थक्यं भवति परं, कालान्तरे द्वयो संमिश्रणाद् नवीना शैली जाता यस्या नाम 'द्वयश्र' 'वेसर' वेति।

दक्षिणभारते यया शैल्या मन्दिरनिर्माणं जातं तथा उत्तरभारते न जातम्। अतः परम्परावैविध्यत्वात् दक्षिणीनिर्माणकला उत्तरीनिर्माणकला इत्यनेन कलाद्वयं परिचायते। उत्तरीनिर्माणकलायाः कृते विश्वकर्माप्रकाश-समराङ्गणसूत्रधारग्रन्थौ स्वीकरणीयौ दक्षिणनिर्माणकलायाश्च कृते विश्वकर्मीयशिल्प-मानसरग्रन्थौ अवलम्बनीयौ।

समराङ्गणसूत्रधार सहस्रवास्तुरहस्यानि उद्घाटयति। अस्य बृहद्ग्रन्थस्य रचना 11 तमशताब्द्यां भोजराजेन कृता यो वास्तुशास्त्रस्य मूलभूतसिद्धान्तैरोतःप्रोतोऽस्ति।

समराङ्गणसूत्रधारग्रन्थे देवप्रतिमावासभवननिर्माण-देव-

प्रतिष्ठा- सभाभवन- प्रार्थनाभवननिर्माणविषये सविस्तरं विवेचनं जातम्। राजा भोजो यस्य राजत्वम् उत्तरीहिमालयतो दक्षिणमलयाचलं यावद्, पूर्वोदयाचलतः पश्चिमास्ताचलं यावद् विस्तीर्णम् आसीत्। तेषु तेषु स्थानेषु सो यानि यानि मन्दिराणि न्यर्मयत्, पुनर्निमाणञ्चाकारयत् तानि सम्प्रति 'नागर' शैली नाम्ना प्रसिद्धानि अस्या शैल्याः प्रसारः हिमालयाद् विन्ध्यपर्वतमालां यावद् दृश्यते। वास्तुशास्त्रदिशा नागरशैल्या निर्मितानि मन्दिराणि तेषामाधारतः सर्वोच्चांशं यावत्, चतुष्कोणयुतानि भवन्ति। नागरमन्दिरे गर्भगृहं, तत्समक्षं क्रमश अन्तरालः, मण्डपः, अर्द्धमयो भवन्ति। एकस्मिन् एवाक्षे एतेषां भागानां निर्माणं भवति।

समराङ्गणसूत्रधारस्य एकस्मिन् श्लोके स्थापत्यकाराणां वास्तुव्यापारे कुशलताया विषये एवमुच्यते-

**''शास्त्रं कर्म तथा प्रज्ञा शीलं च क्रिययान्वितम्।**

**लक्ष्य लक्षणयुक्तार्थाशास्त्रानिष्ठों नरो भवेत्॥''**[9]

परन्तु एतदपि सत्यं यद् सम्प्रति विश्वे वास्तुकलाप्रयोगेषु महती अस्थिरता सञ्जायते। फलतो विविधाः शैल्य उद्भाविताः। परन्तु तासु शैलीषु वस्तुकलायाः किं वा प्रयोजनम्? वास्तविकता एषास्ति यद् वास्तुकला न काचन प्रथा वर्तते न हि शैली वर्तते। एषा तु वास्तुविकासस्य एक- क्रमोऽस्ति स अविच्छिन्नोऽस्ति। विषयेऽस्मिन् फ्रैंक लाइट राइटमहोदयस्य कथनमस्ति यत् वास्तुकलायाः परिधि इतस्ततो भवति परं तस्य केन्द्रं न परिवर्तति।

वास्तुकलाया उद्भवम्-प्राचीनकाले भवनमन्दिरादीनां निर्माणकला सकलकलासु जननीरूपेण विदितासीत्। एषा ललितकलाया सा शाखास्ति यस्या उद्देश्यम् उत्तमभवननिर्माणाय औद्योगिक सहयोग प्राप्तिरिति। परं यदाकदाचिदियं कला अलङ्कारप्रधाना सती अधिककलात्मकताया रूपं प्रति परिवर्तिता जायते। यथा-कोणार्कसूर्यमन्दिरं, दक्षिणभारतस्य गोपुरमन्दिरं, खजुराहोमन्दिराणि, ताजमहलम् एतानि वास्तुकलायाः

द्वितीयविद्यालङ्कृतानि मन्दिराणि सन्ति। कालान्तरे वास्तुकला कियती जटिला भवतु नाम, परन्तु ज्ञान-विज्ञानयो अस्या शाखाया प्रारम्भो जलवायोरुग्रता, वन्यपशूनां भीतता, शत्रूणामाक्रमणम्, एतेभ्य परित्राणाय हि जात इति अनुमीयते। मानवसभ्यताया इतिहासोऽपि एवम्प्रकारेण सम्भवतो जायते। अत: विद्वांस एतं मानवसभ्यताया योजक इति अवदन्।[12]

पुनश्च, वास्तुपुरुषस्य पूजा कदा करणीया तस्मिन् विषये राजवल्लभवास्तुशास्त्रग्रन्थे एवमुच्यते-

**''प्रासादे भवने तडागखनाने कूपे च वापी वने।**
**जीर्णोद्धारे पुरे च यागभवने प्रारम्भनिवर्तने॥**
**वास्तोः पूजनकं सुखाय कथितं पूजा विना हानये।**
**पादौ रक्षसि कं शिवेऽहिनकरयो सन्धि च कोषद्वये।।**[13]

ग्रामस्थापनकाले नगरस्थापनाकाले वा कस्यचिदपि निर्माणकार्ये वास्त्वानुसारं तदप्रकारानुगुणं वास्तुपूजनं भवति। यथा-ग्रामनगर-निर्माणकाले 64 पदयुतवास्तुपूजा, गृहनिर्माणाय 81 पदयुतवास्तुपूजा, जीर्णोद्वाराय 49 पदयुत वास्तुपूजा, मन्दिर-मण्डपयो: कृते 100 पदयुक्तवास्तुपूजा कूप- वापी-उद्यानानां कृते च 196 पदयुतवास्तुपूजा विधेया:।[14]

आम्रतक-महुआ- नारङ्ग-विन्दुक-पुतिक- पाटल-विभितिक- कर्णिकार-सरल- कर्कन्धु-काशमरी- रसाल- पारिभद्र- केसर- तिल-नक्तमाल- अन्यक्षीर - नीमादीनां सुगन्धियुतवृक्षाणां रोपणं भवनयोग्यं शुभप्रदं च कथ्यते। मनुष्याणां वास्तुभूमिरूपेण धनपालादयो शोभना इत्युच्यते।[15]

तेन साकं केषाञ्चन काष्ठानां प्रयोग गृहनिर्माणे वर्जित इत्यपि आदिष्टो जात:। यथा— दक्षिणदिशि पतितो वृक्ष:, श्मशाने स्थितवृक्षानां काष्ठखण्डा:, दुष्टभूमौ विद्यमान् काष्ठखण्ड: दुषिता ज्ञात्वा ते न ग्रहीतव्या: व्यवह्नितव्याश्च[16]

उपसंहार:-एतत्सर्वमवलोक्य यदि भारतीय वास्तुशास्त्रस्य क्षेत्रं वयं पश्याम: तर्हि प्रतिफलनं जायते यद् एतद् व्यापकम् अस्ति। उत्तरस्य हिमालयाद् दक्षिणं यावद् पूर्वाञ्चलाद् अस्ताञ्चलं यावद् व्यापृतमस्ति। वयं भौगलिकदृष्ट्या भवतु ऐतिहासिकदृष्ट्या वा भवतु आलोकपातं कुर्मश्चेद्, सर्वत्र पुराणेऽतिहासेभ्य विविधशास्त्राणि यावद् वास्तुविद्याया: वास्तुकलाया वर्णना ओत:प्रोततया परिलक्ष्यते। वस्तुकलाया: क्षेत्रमेतावत् विस्तृतं वर्तते यत् तस्य वर्णना यावद् वयं कुर्म: तावद् नास्ति पर्याप्तम्। शोधदृष्ट्यापि वयं सर्वे अस्य पूर्तिं कर्तुमसमर्था इति शम्।

## सन्दर्भसूत्रावली ग्रन्थावली च


1. मत्स्यमहापुराणम् ,प्रकाशक: गीताप्रेसगोरखपुर, चतुर्दशमुद्रणम्, पृ. 972 ,अध्यायवास्तु केप्रादुर्भावकीकथाश्लोकसंख्या 6
2. मत्स्यमहापुराणम्, प्रकाशक: गीताप्रेसगोरखपुर, चतुर्दशमुद्रणम्, पृ. 972, अध्यायवास्तु केप्रादुर्भावकीकथाश्लोकसंख्या 16.
3. बृहदवास्तुमाला, पं. रामनिहोरद्विवेदी, चौखम्बासुरभारतीप्रकाशनवाराणसी, संस्करणम् 2014 पृ. 1, श्लोक 1,2,3.
4. (क) हिंदीविश्वकोश, खण्ड- 2 पृ. 236,
   (ख) शब्दकल्पद्रुम,भाग 4,पृ0 258
5. वेशम्भूर्वास्तुस्त्रियाम - अमरकोष, काण्ड 2, पुरवर्ग 19
6. ऋग्वेद 7.54.1, ऋकसूक्तसंग्रह: डॉ. हरिदत्तशास्त्री और डॉ. कृष्णकुमार, साहित्यभंडारसुभाषबाजारमेरठ, पृष्ठ 301
7. ऋग्वेद 1.154.6, ऋकसूक्तसंग्रह: डॉ. हरिदत्तशास्त्री और डॉ. कृष्णकुमार, साहित्यभंडारसुभाषबाजारमेरठ, पृष्ठ 170
8. Samarangana Sutradhara of Bhojadeva: An Ancient Treatise on Architecture in Two Volumes) मूलत: 14 सितंबर 2015 को पुरालेखित. अभिगमन तिथि 25 अगस्त 2015
9. Samarangana Sutradhara of Bhojadeva: An Ancient Treatise on Architecture in Two Volumes)". मूलत: 14 सितंबर 2015 को पुरालेखित. अभिगमन तिथि 25 अगस्त 2015
10. हिंदी विश्वकोश, खण्ड 10, पृ. 448, 49
11. भरतीय संस्कृतिकोश, लीलाधरशर्मा 'पर्वतीय', राजपालएंडसंज, कश्मिरिगेट, दिल्ली-110006, पृ0 831.
12. हिंदीविश्वकोश, खण्ड 10, पृ. 449
13. राजवल्लभवास्तुशास्त्रम्द्वितीयोस्ध्याय: श्लोक-2 पृ. 172
14. राजवल्लभवास्तुशास्त्रम्द्वितीयोस्ध्याय: श्लोक-4 पृ. 173
15. विश्वकर्मवास्तुशास्त्रम्चतुर्थोस्ध्याय: श्लोक-11-14, पृ. 24
16. विश्वकर्मवास्तुशास्त्रम्चतुर्थोस्ध्याय: श्लोक-23, पृ. 26



*शोधछात्र:*
*महाराजा श्रीरामचंद्रभंजादेवविश्वविद्यालय:*
*क्योंझर, ओडिशा*


ग्रामस्थापनकाले नगरस्

ISSN 2582-2616

# योगवेदान्ते मोक्षस्वरुपम्

**कुशाग्र त्रिवेदी**

योगदर्शने महर्षिणा पतञ्जलिना चतुर्षु अपिपादेषु मोक्षस्य स्वरूप विवेचनंकृतमस्ति। यथातत्र प्रथमेपादे ''तदाद्रष्टुः स्वरूपेऽवस्थानम्'' इति सूत्रमुक्तम्। अत्र तदा इत्यस्य असम्प्रज्ञात समाधिसिद्धौइत्यर्थः। अर्थात्यदा असम्प्रज्ञात समाधिसिद्धिः भवतितदानीं जीवात्मासाक्षात्परमात्मस्वरूपे अवस्थितोभवति। तदानींसः जीवः ईश्वरं स्वस्वरूपेण सम्यग्रूपेण विज्ञातुं प्रभवति। इमामेव अवस्थां आत्यन्तिकदु:खनि वृत्तिरूपां नित्यानन्दप्राप्तिरुपाञ्च यौगिकाः आहुः।

तथा च द्वितीये पादे ''तदभावात् संयोगाभावो हानं तदृशैः कैवल्यम्'' इति सूत्रं। इदं सूत्रं द्वितीये पादे पञ्चविंशतितमं वर्तते। अत्र कोऽभिप्रायः इति चेत् तदभावात् तदविद्या तदभावः अविद्याभावः अर्थात् यदा अविद्यायाः अभावो भवति तदानीं दृष्टा जीवात्मा दृश्यस्य संयोगात् अर्थात् प्रकृतेः संयोगात् दूरं गतो भवति संयोगाभावः प्रकृते संयोगाभावः इत्यर्थः। तदानीं प्रकृतिः दूरं गता भवति। एतादृशी एव अवस्था जीवात्मनः कैवल्यमिति उच्यते। तदेव च तृतीये पादे ''सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्'' अर्थात् साङ्ख्योक्ताः सत्त्वरजस्तमोगुणाः योगदर्शनेऽपि वर्तन्ते। तथा च यदा रजोगुणस्य तमोगुणस्य अभावः, अर्थात् रजस्तमोभ्यां मलाभ्यां रहिता यदा बुद्धिर्भवति तदानीं पुरुषस्य या अन्यथाख्यातिः प्रतिष्ठिता भवति तदानीं सर्वेषामपि क्लेशानां दग्धक्लेशबीजत्वं सिद्ध्यति अर्थात् सर्वांशेन सर्वेषामपि क्लेशानां निवृत्तिः भवति तदानीं बुद्धिः शुद्ध्यति। जीवात्मनः यदा बुद्धेः शुद्धता भवति तदानीं तत्र भोगस्य अभावः भवति, पुरुषस्य शुद्धता भवति। बुद्धिशुद्धिः पुरुषशुद्धिः इति द्वयोरपि शुद्धयोः यदा समानरूपता आयाति तदानीं कैवल्यं सिद्ध्यति इति तृतीयेऽपि पादे कैवल्यस्वरुपं भगवता पतञ्जलिना न्यरूपि।

तद्वदेव चतुर्थपादेऽपि ''पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम् स्वरूपप्रतिष्ठा वा चितिशक्तिरिति'' इति चतुर्थे पादे अपि चतुस्त्रिंशे सूत्रे उक्तम्, अर्थात् यदा मनुष्यस्य जीवात्मनः चित्तं भोगेन अपवर्गेन रहितं भवति, कार्यकारणरूपकलापाद् रहितं भवति, यदा च त्रिपुटीलयः भवति, सर्वेऽपि क्लेशाः विनिर्मुक्ताः भवन्ति, यदा च ईश्वरस्वरूपं सम्यक् रूपेण प्रतीयते तदा सः ईश्वरस्य सम्यक् ऱूपं विजानन् ईश्वरस्वरूपे एव अचस्थितो भवति तदेव अस्य जीवस्य कैवल्यम्, मोक्षः। इत्थञ्च कैवल्यस्य वा मोक्षस्य वा निरूपणं योगशास्त्रे प्रसिद्धं तद् वेदान्तानुगुणं वर्तते। कथमिति चेत् वेदान्तेऽपि तावत् स्वस्वरूपानन्दावाप्तिः एव आत्यन्तिकदु:खनिवृत्तिं प्रति कारणम्, अर्थात् जीवस्य ब्रह्मत्वरूपं यत् स्वकीयस्वरूपं वर्तते तादृशस्य स्वरूपस्य प्राप्तिरेव मोक्षस्य कारणं भवति इति वेदान्तेषु गीयते अतः मोक्षविषयैकः विचारः अपि प्रायः सर्वांशेन योगवेदान्तयोः समानः भवति।

ननुकोऽयंमोक्षोनामइतिचेत्उच्यते। आत्यन्तिकीदु:खनिवृत्तिः परमानन्दप्राप्तिरेवमोक्षः। सर्वैः अपिदार्शनिकैः मोक्षाख्यः कश्चित्पदार्थः अङ्गीक्रियतेएव। अतएवमोक्षवाचकानि पदानि यद्यपि भिन्नानि स्युः तथापि तेषां यः अर्थः स च सर्वत्रापि समानः एव वर्तते। यथा च अमरकोषे श्रूयते–

''**मुक्तिः कैवल्यनिर्माणं श्रेयोनिःश्रेयसाऽमृतम्**''

अत्र मुक्तिः, कैवल्यं, निर्वाणं, श्रेयः, निःश्रेयसं, अमृतम् इत्यादीनि मोक्षस्य पर्यायवाचीनि पदानि भवन्ति। कुतः सर्वैः दार्शनिकैः मोक्षस्य निरुपणं करणीयमेव? कस्तत्र निर्बन्धः? इति चेत् यद्यपि धर्मार्थकाममोक्षाख्याः चत्वारः पुरुषार्थाः लोके प्रसिद्धाः किन्तु तेषु पदार्थेषु यः मोक्षाख्यः पदार्थः वर्तते अथवा पुरुषार्थः वर्तते सः नित्यः इत्युच्यते। तत्र धर्मो नाम यागादिः इत्यन्ये अर्थात् मीमांसकाः।

**धृतिक्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्यासत्यमक्रोधः दशकंधर्मलक्षणम्॥ इति धर्मशास्त्रकाराः।**

तथा च धर्मशास्त्रकाराणामनुसारेण अनेकानि तत्र धर्मलक्षणानि प्रतिपादितानि सन्ति यतः अभ्युदयनिःश्रेयसहेतुः सः धर्मः इति नैयायिकाः। धर्मः इति पुद्गलविशेषः इति बौद्धाः। एवं सर्वैरपि धर्मः इति कश्चित् पदार्थः व्याख्यायते। तेन धर्मेण जायमानं यत्फलं तत्र धर्मरूपः पुरुषार्थः इति कथ्यते किन्तु यदि यागादिः इत्येव धर्मः स्वीक्रियेत तदानीं तज्जन्यं यत्फलं स्वर्गादिकं तत् कृतकं भवति। तर्हि यत् कृतकं तदनित्यमित्यादिन्यायेन अथवा इति व्याप्तेः स्वर्गरूपफलस्य कृतकत्वात् अनित्यत्वापत्तिः अतः धर्मरूपपुरुषार्थव्यतिरेकेण कश्चित् नित्यः पुरुषार्थः वक्तव्यः इति मोक्षरुपपुरुषार्थस्य प्रवृत्तिः।

ननु अर्थकालयोः का गतिः इति चेत् धर्ममूलौ एव हि अर्थकामौ। धर्मार्थमेव कामः, धर्मार्थमेव अर्थार्जनञ्च करणीयम्, तेषां धर्ममूलत्वादेव पुरुषार्थत्वं वर्तते। अतः एतेषामपि पुरुषार्थानामनित्यत्वं वर्तते तस्मात् नित्यः कश्चित् मोक्षरुपः पुरुषार्थः पृथक् रुपेण दार्शनिकैः स्वीक्रियते।

ननु कृतकत्वव्यतिरेकेण कश्चित् हेतुः वर्तते वा धर्मादीनां त्रयाणामनित्यत्व ख्यापनाय इति चेत् अर्थकामयोस्तु प्रत्यक्षेण एव अनित्यता दृश्यते, अर्थकामौ एव पुरुषार्थौ धर्मादीनां अनित्यत्वानुमाने सपक्षौ भवतः। यदि अनुमानरुपप्रमाणं हीयते तर्हि ''तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते'' इत्यादि श्रूत्या धर्मस्यापि अनित्यता सिद्ध्यति, तर्हि यः मोक्षरुपः पुरुषार्थः तस्य नित्यत्वं कथमिति चेत् ''न स पुनरावर्तते'' इत्यस्य यः मोक्षं प्राप्तवान् जनः तस्य पुनः आवृत्तिः अर्थात् जननमरणरुपे संसारे पुनः तस्य आवर्तनं न भवति इति श्रुत्यर्थः। तर्हि धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्षः एव परमपुरुषार्थः इत्येव अत्र वेदान्तसिद्धान्तः। एषः एव सिद्धान्तः योगिभिरपि स्वीक्रियते। मोक्षस्य स्वरूपं मुक्तेः रूपं इत्युक्ते वेदानशास्त्रे न किञ्चित् विलक्षणं किं तर्हि स्व स्वरुपानुसन्धानमेव।

ननु न हि कश्चित् जनः स्वात्मानं न जानाति इत्यस्ति अर्थात् सर्वोऽपि जनः स्वात्मानं जानात्येव यथा अहं मनुष्यः, अहं ब्राह्मणः, अहं कर्ता इत्यादिरुपेण अहं पदवाच्यः यः वर्तते स च आत्मा प्रत्यक्षसिद्धः एव तर्हि सर्वस्यापि जनस्य स्वस्वरुपनुसन्धानात्मकज्ञानं वर्तते चेदपि मोक्षः नास्तीति कारणसत्त्वे कार्यभावरूपः दोषः तत्र आयाति इति चेत्, न-यद्यपि अहं मनुष्यः इत्याकारकज्ञानेन स्वस्वरुपानुसन्धानं वर्तते। किं इदं स्वस्वरूपानुसन्धानं तदेव यत् उपनिषत्सु प्रतीयते इति चेत् न, तर्हि औपनिषदः नित्यशुद्धबुद्धमुक्तस्वभावः आत्मा यः गीयते तादृशस्य आत्मनः स्वव्यतिरेकेणैव अनुभवात् न स्वांशेनैव अनुभवः अस्तीति कृत्वा अवश्यं स्वस्वरूपानुसन्धानाय यतनीयं तादृशः स्वस्वरुपानुसन्धानात्मकः एव मोक्षः तादृश स्वस्वरुपानुसन्धानेनैव आत्यन्तिकी दुःखनिवृत्तिः परमानन्दप्राप्तिर्भवति।

ननु आत्यन्तिकी दुःखनिवृत्तिः करणीया चेत् दुःखस्य विरोधी यत् वर्तते तेनैव निवृत्तिः साधयितुं शक्यते। अर्थात् निवृत्तिं प्रति स्वविरोधिनः एव कारणत्वमभ्युपगम्यते शास्त्रेषु, यथा यदि तमसः निवृत्तिः करणीया तर्हि तमोविरुद्धः यः प्रकाशः वर्तते सैव अपेक्ष्यते, तद्वदेव दुःखस्य निवृत्तिः कथं ज्ञानेन इति चेत्, तत्र अविद्यारेव दोषत्वेन हेतुः अर्थात् दुःखं प्रति अविद्यायाः एव कारणत्वं वर्तते अतः स्वस्वरुपानुसन्धानात्मकविद्यया अविद्यायाः निवृत्तिर्भवति। अविद्यारुपस्य यत्कार्यं दुःखादिकं तच्च दुःखादिकं कारणनिवृत्तौ कार्यस्य स्वयमेव निवृत्तिर्भवतीति कृत्वा स्वस्वरुपानुसन्धानात्मक जीवब्रह्मणोः ऐक्यरूपज्ञानं तत्र मोक्षसाधनं भवति इति मोक्षस्य स्वरूपं, तच्च मोक्षं क्वचित् अनेकविधं क्वचिच्च द्विरुपं वर्तते, यथा क्वचित् विदेहमुक्तिः जीवन्मुक्तिः इत्येवरूपेण द्वैविध्यं प्रतिपाद्यते, क्वचिच्च सालोक्यमुक्तिः, सायुज्यमुक्तिः, सारूप्यमुक्तिः, विदेहमुक्तिः एवंरुपेण चतुर्धा क्वचिच्च पञ्चरुपेण मुक्तिः व्याख्यायते। अतः सर्वैर्पि मुक्तिस्तु आत्यन्तिकी दुःखनिवृत्तिरुपा परमानन्दप्राप्तरूपा च वर्तते। यादृशं च मोक्षं अथवा यादृशीं च मुक्तिं सम्प्राप्य जनः अस्मिन् जननमरणरूपसंसारे नैव उत्पद्यते। तदेव च मोक्षस्य स्वरूपमिति।

## आकराः


1. पातञ्जलयोगदर्शनम्
2. श्रीमद्भगवद्गीता
3. उपनिषद्भाष्यम्
4. मनुस्मृति
5. अमरकोषः
6. छान्दोग्योपनिषत्
7. बृहदारण्यकोपनिषत्


## पादटिप्पणी

1. योगसूत्रम्1.3
2. योगसूत्रम् 2.25
3. योगसूत्रम् 3.55
4. योगसूत्रम्. 4.34
5. अमरकोषः
6. मनुस्मृति 6.92
7. छान्दोग्योपनिषद् 6.5
8. बृहदारण्यक 2.4.5.


*शोधछात्रः*

*केन्द्रीयसंस्कृतविश्वविद्यालयः वेदव्यासपरिसरः,*

*बलाहरः, काङ्ड़ा, हिमाचलप्रदेशः।*